गमनसमयेऽत्रान्या दृष्टिर्यथा न पदं लभेत्
तत इह सुखं भूयादेवं भवत्कृतसाधने ॥ २६७ ॥
भवदीयदृगञ्चलस्पृगप्यचलं भावमिमं लभेत हि ।
भवतीषु सदैकरूपतेत्यलमुक्त्यातिविशुद्धजातिषु ॥ २६८ ॥
किमतःपरमधिकं ननु वाच्यं यद्भवदपाङ्गसङ्गेन ।
अहमपि निजपुंलक्षणभावं प्राप्नोमि नेतरथा ॥ २६९ ॥
अपि चापाङ्गसङ्गेन तथात्वे का विचित्रता ।
यदेतत्स्मृतिरप्यस्मास्वपाङ्गं कुरुते स्फुटम् ॥ २७० ॥
तस्मादधुना यात व्रजपवला यत् पुरोवभात्येषः ।
चण्डांशुः कुवलयकुलसङ्कोचकृतावसङ्कोचः ॥ २७१ ॥
इति निजनिजप्राणेशस्योदिते वचने मुदा
श्रवणपथगे भाविमेष्वङ्गसङ्गविनिश्चयात् ।
य इह मुदकूपाराः प्रादुर्बभूवुरहो गृह-
व्रजनसिकताकूटादप्योदका इव तेऽभवन् ॥ २७२ ॥
यदीयभाव एवासां सर्वविस्मारकोऽभवत् ।
कथं तस्मिन् पुरःस्थायिन्यहो गेहगतिर्भवेत् ॥ २७३ ॥
प्रायो यथाऽतिरणरङ्गविदग्धतातिमुग्धमनद्धकवचा अपि वीरवर्याः ।
शान्ते पुरः प्रतिभटे भवति स्वगेहमेवं व्रजन्त्यपि तथैव सुमध्यमास्ताः ॥ २७४ ॥
तेपि यथा वीररसोद्भावप्राचुर्यविस्मृतान्यरसाः ।
आरणलाभादार्ति लभन्त एवं कृशोदर्यः ॥ २७५ ॥
यथा कथञ्चित् स यदा कदाचिन्निजाङ्गसङ्गं विदधातु नाथः ॥
इत्थं चिरादिष्टमवाप्य हृष्टास्तदिच्छया जग्मुरिमाः स्वगेहम् २७६
वचनादिष्टमाज्ञानात् प्रियमभवदालि वचनं यत् ।
तस्मातो गृहगमनं युक्तं तासां तदाज्ञातः ॥ २७७ ॥

अहं त्वेवं जाने प्रियसखि वरस्तुष्यतु परं
भवत्वन्यन्या चेत्यतिरतिभराक्रान्तहृदयाः ।
कृताः प्रागप्येता निजशिरसि बद्धाञ्जलिपुटा
यथा पृष्टेनैवं स्वगृहगतिमत्योपि सपदि ॥ २७८ ॥
तथात्वेपि तदा प्रेयान् पुरःस्थित इति प्रियाः ।
मुदिताः सपदि प्रायस्तद्भावाद्विपर्ययः ॥ २७९ ॥
ततो चिरादेव मुकुन्ददत्तवराप्तरात्रिष्वनवद्यभावाः ।
कुमारिकाः प्राणपतिप्रियाश्च प्रौढा विजह्रुर्निजवल्लभेन ॥२८०॥
इतोऽन्यत् सम्प्रार्थ्यं वरमिह वरीवर्ति किमु नः
सदाऽस्मत्स्वामिन्यः पुलिनमुत कुञ्जं रसभुवम् ।
मुदा सङ्गेऽस्माकं कथमपि समागत्य हरिणा
रमन्त्वस्माकं तच्चरणरजसा चास्तु रमणम् ॥ २८१ ॥
इति श्रीमद्गोपीजनचरणदास्याभिधमहा-
पुमर्थावाप्त्यैवोज्झितसकलमोक्षाभिरुदितम् ।
मदीयात्मप्राणेन्द्रियहृदयदेशेषु सततम् ।
स्वयं भूयादेतद्व्रजनरससर्वस्वममलम् ॥ २८२ ॥
इति श्रीमद्व्रजवधूवल्लभाङ्घ्रिरजोर्थिना ।
रचितं रससर्वस्वं विट्ठलेनाप पूर्णताम् ॥ २८३ ॥

इति श्रीमद्गोपीजनवल्लभचरणकमलयुगलैकशरणश्रीविट्ठले-
श्वरविरचितं रससर्वस्वं सम्पूर्णम् ॥

---

श्रीकृष्णाय नमः ।

श्रीगोपीजनवल्लभाय नमः ।

श्रीमदाचार्यचरणकमलेभ्यो नमः ।

# शृङ्गाररसमण्डनम् ।

## दानलीला ।

श्रीमत्प्रभुचरणप्रकटिता ।



मुदा चन्द्रावल्या कुसुमशयनीयादि रचितुं
सहासं प्रोक्ताः स्वप्रणयिसहचर्यैः प्रमुदिताः ।
निकुञ्जेष्वन्योन्यं कृतविविधतल्पेषु सरसां
कथां स्वस्वामिन्याः सपदि कथयन्ति प्रियतमाम् ॥ १ ॥

अशेषशुभकृतोदयैरखिलमङ्गलैर्वेधसा
मनोरथशतैः सदा मनसि भावितैर्निर्मिते ।
अहन्यतिमनोहरे निजगृहाद्विहारेच्छया
सखीशतवृताऽचलद्व्रजवनेषु चन्द्रावली ॥ २ ॥

समुद्ग्रथितमालतीकुरवकादिपुष्पावली-
गलत्परिमलोन्मदभ्रमरयूथसन्नादितम् ।
उदारमतिचित्रितं मृगमदादिभिर्बिभ्रती
मनोभवमदापहं किमपि केशपाशं सखि ॥ ३ ॥

श्यामेन्दोरनुरूपां विधिरचितां तारकापहं मन्ये ।
यत्तत्करनखकिरणा न जातु सख्यस्त्यजन्ती माम् ॥ ४ ॥

कुङ्कुममलयजमृगमदचित्रितकुसुमं तदीयधम्मिल्लम् ।
नो किन्तु कुसुमधनुषस्तूणीरं सज्जितं विधिना ॥ ५ ॥

न धम्मिल्लो मौग्ध्यामृतजलमुचामेष निचयो
न पुष्पाणीमानि त्रिदशपतिमौर्वीपरिणतिः ।

न मुक्तागुच्छानि प्रकटमुपमाम्भःकणभरो
न काश्मीरोद्भूता सुभगतररेखा तडिदियम् ॥ ६ ॥
निसर्गसुन्दरोऽप्यालि सूक्ष्मचित्राम्बरान्तरे ।
गूढो भाव इवैतस्याः सोऽदृश्यत विलक्षणः ॥ ७ ॥
मत्समर्पितसिन्दूररेखोपरि परिस्थिताम् ।
मुक्ताफलावलीमालि सीमन्ते त्रिभ्रती वभौ ॥ ८ ॥
न सा सिन्दूररेखालि मुक्ताहारयुताऽपि तु ।
सफेनराजिराभाति पूरः सौभाग्यवारिधेः ॥ ९ ॥
वदनसुधाकरकिरणप्रसृतेर्मुक्तावतेरिदं चित्रम् ।
यत्कचनिचयतमोऽपि प्रियसखि सततं प्रकाशयति ॥ १० ॥
सुस्निग्धामलकुञ्चितमेचकसुभगालकावलिं तरुणि ।
वदनाम्बुजस्य परितो दधती रेजे सरोजाक्षी ॥ ११ ॥
ईषद्धासविकाशविभ्रमगलल्लावण्यमध्वानना-
म्भोजस्यालकषट्पदालिरमला मत्ताऽपि राधा सखि ।
यत्स्वाभाविकवाङ्कृतीरपि मुदा विस्मृत्य नित्यं पिब-
त्यस्पन्दं तदिदं विभाति भुवने पङ्केरुहास्यद्भुतम् ॥ १२ ॥
नैतन्मुखं प्रियाया राकापतिरेव राजते विमलः ।
नेयं कुन्तलमालासुपमा मुग्धाः सखीदृशां ताराः ॥ १३ ॥
सकमलयमुनातरलोद्भृवानिलजातकम्पितव्याजात् ।
कन्दर्पकोटिशोभामलकचयोऽयं तिरस्कुरुते ॥ १४ ॥
विशाले भाले हीरकमणिगणस्वर्णखचितं
स्फुरन्मुक्तामोतं तिलकमलकाकान्तिरुचिरम् ।
ततस्तिर्यग्रेखं मृगमदमयं दीपकलिका-
निभं सिन्दूरस्य प्रियसखि ततश्चारु दधती ॥ १५ ॥
रेजे मुक्तामयो विन्दुः कस्तूरीतिलकान्तरे ।
चलत्कादम्बिनीराजद्राकापतिरिवामलः ॥ १६ ॥

न भ्रूलता सा न विलोचने ते न विभ्रमास्ते सरसीरुहाक्ष्याः।
कौमारलीलाजितकाममौर्वी बाणा धनान्येव विलुण्ठितानि ॥१७॥
त्रिभुवनजयमदजनितविचक्रतामालि विभ्रती तद्भ्रूः।
मधुसूदनमपि जेतुं सपदि व्यग्रेव चपलास्ते ॥ १८ ॥
ज्ञातं मया सखि पुरैव नवानुराग-
राकाकलानिधिरुदेष्यति तद्भ्रुवीति।
यत्तस्य कोमलकरप्रसृतिः सरागा-
नेत्रद्वयेति रुचिरा प्रकटा बभूव ॥ १९ ॥
यथास्त्रविद्ययाऽनङ्गो विजितस्तां मृगीदृशे।
अथोपदिशतो नेत्राचार्यौ श्रुतियुगे शनैः ॥ २० ॥
जगन्ति जेतुं चलिते दृशौ तन्मार्गावरोधे श्रवणद्वयेन।
सरोषमुन्मार्गमिव प्रवृत्ते वक्राञ्चले रेजतुरालि तस्याः ॥ २१ ॥
परिधायाञ्जनकञ्चुकमपाङ्गबाणैः श्रुतिदरीसंस्थम्।
हन्तुं मदनमृगं तल्लोचनमृगयू विचारयतः ॥ २२ ॥
श्रवणयुगलेऽस्यास्ताटङ्कैः विचित्रमहामणि-
प्रकरकनकप्रादुर्भूतप्रभाजितभास्करे॥
मदगजभवश्रीमन्मुक्ताफलैरपि मण्डिते
कुवलयदलश्रेणीपूर्णोदरे सुविरेजतुः ॥ २३ ॥
न भ्रूरियं चपलशैशवलीलयैव
द्राङ्निर्जितस्य धनुरेव मनोजराज्ञः।
नो लोचने सखि तदाहितपुष्पबाणौ
सर्वस्वमेव हृतमस्य न ते विलासाः ॥ २४ ॥
स्यातां यदि राकेशौ तदुपरि च दिवाकरावुदेयाताम्।
तर्हि तथाविधगण्डद्वयसाम्यं स्यात् सरोजाक्षि ॥ २५ ॥
नवकुङ्कुमपाटीरेखागण्डद्वये सखि।
विरेजिरे मृगदृशः प्रकटाः सुषमा इव ॥ २६ ॥

शुकतिलकुसुमप्रदापहसुन्दरनासापुटे कुरङ्गाक्षी ।
अनिदूरलम्बिमुक्ताफलमालोलं यथा दधती ॥ २७ ॥
नासाग्रगतमुदारं मुक्ताफलमालि तत्र कमलाक्ष्याः ।
किन्त्वाधिरयवशेन मन्ये मुखमामृतस्यन्दः ॥ २८ ॥
जितबिम्बेऽधरबिम्बे शम्बररिपुशास्त्रगूढतत्त्वे सा ।
मुखकमलोदर इव तनुतररेखां बिभ्रती रेजे ॥ २९ ॥
निसर्गरागातिमनोहरस्य ताम्बूलरेखापरिरञ्जितस्य ।
स्मितोदितस्फीतरदांशुभूषाऽधरस्य सौन्दर्यमवाक्यमर्थं मे ॥३०॥
तनुतरसुभगाधरगतरेखा नहि धीपमूषणाङ्ग्यास्ताः ।
वागमृतजलधिपूरः स्रोतास्येवोत सहचर्याः ॥ ३१ ॥
अचिरांशुलता अपि द्विजालिव्यपदेशायदतिस्थिरा निभर्ति ।
व्रजनाथमनो विनोदकारि स्ववशे सा कुरुते न तद्विचित्रम् ॥ ३२ ॥
अयि प्रियसखि द्विजावलिरियं न किन्तु प्रिया-
नुरागरसरञ्जिता रतिरसामृतश्रेणयः ।
ददाति तदियं सदा रहसि माधवायैव सोऽ-
प्यमन्दमनुरज्यते रतिरसज्ञचूडामणिः ॥ ३३ ॥
मुखचन्द्रमयूखा वा किं वा हीरकराजयः ।
दाडिमीबीजपङ्क्तिर्नेत्यनिर्धारो रदेष्वभूत् ॥ ३४ ॥
आधिरयादधरसुधां स्खलेदिति मामशङ्कया विधिना ।
रचिते तदुपष्टम्भे चिबुके पात्रीरमादधती ॥ ३५ ॥
अस्मिन्मुखेन्दौ मदनेन्दुमप्यधिकारिता मात्रकलङ्कितेति ।
प्रकाशयन्ती चिबुकेऽञ्जनस्य बिन्दुं विरेजे दधती मृगाक्षी ॥३६॥
किं वर्णयामि सख्यश्चिबुकगतश्यामबिन्दुसौन्दर्यम् ।
मन्ये रसिकशिरोमणिमाधवमन एव तल्लग्नम् ॥ ३७ ॥
किमयममलो राकाधीशो न तत्र मधुव्रताः

---

१ रेखा इति पाठः । २ दधारस इति पाठः ।

कमलमथवा स्मेरं तत्राचिरांशुलता न हि।
क्रिपमृतमयो पूर्वो मेघो न तत्र हि खञ्जना-
विति शशिमुखाम्भोजे कासां न संशयभूरभूत् ॥ ३८ ॥
सुधांशुसारं परिगृह्य वेधास्तदाननं यद्विदधेऽतियत्नैः।
मालिन्यमाभाति तदम्बुजाक्षि तन्मण्डले चिह्नमिति प्रसिद्धम् ३९
स्वरेण भुवनत्रयं विजितमित्यभिज्ञापकं।
तदुद्भवभुवि स्मरसमयहरे स्वकण्ठे बभौ।
व्रजेशभुजभूषणे सखि मनोज्ञरेखात्रयं
स्वरत्रयमिव स्फुटं मलयजाङ्किते बिभ्रती ॥ ४० ॥
मणिवरहीरकहाटकजटितं मुक्ताफलावलीप्रोतम्।
मकर इव भावनिचयो भूषणमस्या बभौ कण्ठे ॥ ४१ ॥
उरसि विविधमप्याकल्पभारं वहन्ती
रतिरणजयभूमौ राधिकावल्लभस्य।
अकमभिगुहुभेऽतिस्थूलगुञ्जामणीना-
मतिरुचिरमुदारं हारमाबिभ्रती सा ॥ ४२ ॥
मृगमदपत्राङ्कितमुरु कुङ्कुमपङ्केन रूपितं रेजे।
रतिपतिमङ्गलकलशद्वयमिव कुचयुग्ममेतस्याः ॥ ४३ ॥
कुचद्वयं नैव रसौघवित्तमेकीकृतं स्वं द्विविधं स्मरेण।
न चूचुके किन्त्वपरो मुरारेः प्राप्नोतु मेत्यर्पितराजमुद्रे ॥ ४४ ॥
लावण्यामृतसरसि व्रजाङ्गनावपुषि खेलतः सरुयः।
कोकौ कुचौ मनोज्ञौ संश्लिष्टाङ्गावतिस्नेहात् ॥ ४५ ॥
रतिरसभाण्डद्वयमिव सर्वस्वमनङ्गभूभुज इवाल्यः।
कुचयुगलं निजवसनाञ्चलेन सङ्गोपयन्ती सा ॥ ४६ ॥
काठिन्येन श्रीफलमतिसरसतया सुधासमूहं च
सद्वृत्तमरुणताभ्यां जिग्ये कोकान् कुचद्वन्द्वम् ॥ ४७ ॥

१. इत्यद्वयमेनैवेति पाठः। २ नेत्यर्पितेति पाठः।

सौन्दर्यसीम कुचकुम्भयुगं विधाय
वेधाः कुदृष्टिभवदोषभियाञ्जनस्य।
बिन्दुद्वयं यदकरोत्सखि तेन तत्र
श्यामाग्रतेत्यहमये कमलाक्षि मन्ये ॥ ४८ ॥
गोपाङ्गनाङ्गसुषमामृतसरसि कुचाब्जयुग्ममतिसरसम्।
मन्ये सखि सञ्जातं यत्कोशोपर्यपि भ्रमरौ ॥ ४९ ॥
सुवर्णसितयूथिकाकुसुमनिर्मितां बिभ्रती
कुरङ्गमदकुङ्कुमारुणकणैर्विचित्रां स्रजम्।
विचित्रवसनान्तरे सखि विलक्षणां माधव-
प्रियाति शुशुभे कुचोपरि विहारमातन्वती ॥ ५० ॥
सुन्दरकुचहेमाम्बुजनाल इवाली व्यरोचत कृशाङ्ग्याः।
नाभीसरोभवः सखि तन्वी रोमावली तस्याः ॥ ५१ ॥
तनुतरकुवलयदलमयबाणः कुसुमायुधेन तन्वङ्ग्याः।
हृदयेर्पित इति सख्यो मन्ये नो रोमपङ्क्तिः सा ॥ ५२ ॥
स्वयं धूर्तो नाभीविवरकुहरस्थो रतिपति-
र्मनो मीनं तस्या हृदि सरसि कौमारचपलम्।
वशीकर्तुं सख्यो दधति गुणतारुण्यबडिशं
तनौ तत्सूत्रश्रीर्न तु मसृणरोमावलिरियम् ॥ ५३ ॥
न सा रोमावली किन्तु तदीयहृदयोद्भवा।
नाभीह्रदे पतन्त्यालि रसधारेव राजते ॥ ५४ ॥
मत्तेभकुम्भसुषमामदहारिणैव
नो केवला किमुत केसरिगर्वितस्य।
निर्वासनस्त्वमपि वर्तत इत्यतीव
मध्ये कृशां सखि चकार विधिर्मृगाक्ष्याः ॥ ५५ ॥
न तन्मध्यं तस्याः किमुत रतिशास्त्रस्य निभृतं
रहस्यं तद्वेत्ता शशिवदनि भोक्ता च न परः।

घनश्यामादित्थं मथयितुमुदारेण विधिना
कृता रेखा श्यामा सहचरि न रोमावलिरियम् ॥ ५६ ॥
न सा नाभिस्तस्याः किमुत सुषमासीधुसरित-
स्तनोरावर्तोऽयं कुवलयदलाक्ष्याः सहचरि ।
यतश्चेतोऽस्माकं चतुरतरमप्यत्र पतितं
निमज्जत्येवेदं श्रुतिगतिविवेकादिरहितम् ॥ ५७ ॥
विविधमणिजटितकनकमसूनलसदसितपट्टगुच्छाभ्याम् ।
लसतातिपीतदाम्ना शुशुभे ग्रन्थिः प्रियानीव्याः ॥ ५८ ॥
अयि सखि नितम्बोऽस्या नाऽयं परं मदनप्रिया-
सदनजघनोपान्ते कान्ते कुरङ्गविलोचने ।
विधिविरचितः कोशस्तस्या रसौघधनस्य य-
द्गुरुगुरुतरः शश्वद्गुप्तो हरिप्रणयास्पदः ॥ ५९ ॥
विचित्रमणिमेखलागतमनोज्ञमुक्ताफल-
प्रवेकक्रृतजालकोद्ग्रथितघुर्घुरूघण्टिकाः ।
कलस्वनविमोहितत्रिदशवृन्दवृन्दारिकाः
सरोजदललोचने सखि विरेजुरुद्यत्प्रभाः ॥ ६० ॥
सुषमानिधानहरिकण्ठभूषणं विधिना मनोरथशतेन निर्मितम् ।
असितैरये सुभगकाचकङ्कणैः शुशुभेऽति बाहुयुगलं मृगीदृशः॥६१॥
ततः कनककङ्कणावसितपट्टपुष्पाश्रितौ
ततश्च नवमुक्तिकाविरचितौ मुदा बिभ्रती ।
मनोज्ञकरयोः प्रिये सुमुखि राधिकावल्लभ-
प्रियाति शुशुभे तयोर्विदधती समान्दोलनम् ॥ ६२ ॥
ततः पश्चाचामीकरसुघटितौ चारुवलयौ
ततः सा गौराङ्गी मरकतमयावङ्गदवरौ
स्वयाद्दोरस्मन्मानसनयनपाशाविव दध-
त्यये चेतः कासां प्रसभमहरम्बाम्बुजमुखि ॥ ६३ ॥

विविधमहामणिजटिताः कनकमया मुद्रिकास्तदङ्गुलिषु ।
दशसु नखोदितदीधितिभूषासु विरेजुरेणाक्षि ॥ ६४ ॥
नेमौ बाहू वत विसलते प्रेमपीयूषपूर्णे
नो वा तस्या मृदुकरतले किन्तु पङ्केरुहे ते ।
नाप्यङ्गुल्यः सखि परमिमाः श्रेणयस्तद्दलानां
नेमे चञ्चन्नखरमणयः किन्तु तेषां प्रभैव ॥ ६५ ॥
नो पाणिरेष कुसुमायुधबाणराज-
पङ्केरुहं न नखरा मणिकान्तिभाजः ।
किन्तु प्रियालि रतियुद्धविधौ जयाय
कामार्पिताः सुमुखि शातशिलीमुखाग्राः ॥ ६६ ॥
मन्थरागतिरियं चरणानां वारणस्य कथमत्र करस्था ।
इदमेतेतिसुभगेति न कासां संशयः सखि बभूव तदूरौ ॥६७॥
कदलीकाण्डविनिर्मितहिन्दोलास्तम्भयुगलमेवैतत् ।
कुसुमायुधस्य मन्ये तस्या नोरुद्वयं सत्यः ॥ ६८ ॥
तस्याः सानन्दगोविन्दमानसाया मृगीदृशः ।
मन्ये रतिगृहस्तम्भद्वयं जानुद्वयं न तत् ॥ ६९ ॥
विविधनूपुरसिञ्जितमोहितत्रिदशनाथवधूवरमानसम् ।
स्फुरदलक्तकरञ्जितपङ्क्तीष्वयि शुभे शुशुभे चरणद्वयम् ॥७०॥
स्मितलक्ष्मीलवलज्जितरतिपतिकृतचरणसरसिजमणतौ ।
प्रतिबिम्बितास्तदीयाश्चन्दनचिन्द्वाल्यो न नखाः ॥ ७१ ॥
तस्याः कृष्णेन्दुसङ्गं हरिभजनदशा भाविनं भावयित्वा
तद्योग्यत्वार्थमेतच्छिशिरतरमये कुर्वता पादयुग्मम् ।
सारेणाम्भोरुहाणां सुचतुरविधिना चारु निर्माय सत्य-
स्तस्याग्रेष्वाहिता ये सितकिरणचयास्ते नखाख्यां भजन्ते॥७२॥

१. कनकरता इति पाठ. । २. परिमिता इति पाठः । ३. भाति विभाय घात्रेति पाठ. । ४. दृशामनिसरसष्टेति पाठः ।

चरणाङ्गुल्याभरणान्यति रुरुचुरमन्दकान्तिकान्तानि।
विषमानङ्गभुजङ्गमफणमणय इवैणशावाक्ष्याः ॥ ७३ ॥
तादृशचित्राश्चलजुषि शिरसि विचित्रासनं सरोजाक्षी।
दधिकलशं तदुपायनमिव दधती साधिकं शुशुभे ॥ ७४ ॥
अलोलग्रीवं सा दधिकलशिकां मूर्ध्नि सुभगां
वहन्ती तारुण्यप्रभवमदतस्तुच्छत्रदिमान्।
सुरेन्द्रब्रह्मादीनपि विगणयन्त्यालि सहज-
स्मितस्मेरव्रीडातरलितदृशा कात्र मुमुदे ॥ ७५ ॥
सखीशतहृताचलद्वलयकिङ्किणीनूपुरा-
द्यमन्दकलसिञ्जिताञ्चितमनोज्ञगत्या वने
वयस्यसहितो व्रजाधिपसुतो व्रजन्तीं पुरो
ददर्श सखि सुन्दरीमनतिदूरतस्तां मनाक् ॥ ७६ ॥
चकितनयनं दृष्ट्वा दृष्ट्वा तदाननपङ्कजं
न समशकदादातुं दृष्टिं मनागपि माधवः।
निजसहचराशङ्कालज्जावधानमपि व्रज-
प्रियसखि तदा नाभूत्तस्य प्रियाहृतचेतसः ॥ ७७ ॥
चन्द्रावलीसहासोन्नितगलत्परिमलाऽनिलः
तत्सङ्गम इवाङ्गेषु सङ्गतः पुलकं व्यधात् ॥ ७८ ॥
कथमस्या ननु सङ्गो भवेत्कथं वाऽत्र सहचराज्ञातः।
इति चिन्तयन्नुपायं ज्ञात्वा हरिराह गोपालान् ॥ ७९ ॥
गोप्यो गोरसविक्रियार्थमखिला गच्छन्त्यदत्त्वोचितं
मद्दानं तदिहानयध्वमचिरान्मत्सन्निधौ गोपकाः।
मा जातु स्पृशतोक्तिभिः परमिमा वाच्या इति स्वामिना
प्रोक्तास्तिष्ठत तिष्ठतेतिवचनास्तेऽत्रागमन् सत्वरम् ॥ ८० ॥
तत्र काचिदुवाचैतान् किमरे गोपदारकाः।
आकारयति वो नन्दनन्दनो गोकुलाधिपः ॥ ८१ ॥

कथमेवं वयं किं वा दास्यस्तस्य कुलाङ्गनाः ।
यात प्रतिष्ठयास्माकं न तवेयं विभीषिका ॥ ८२ ॥
न वयं स्वत एव किञ्चिदुच्चैः कुलयोषित्सु ससाहसं वदामः ।
व्रजनाथवचः परं विधेयं क्षुधिताः किं ननु गच्छत स्वगेहम् ॥ ८३ ॥
मा यात नन्दशपथो व्रजनाथाज्ञां विना वने तस्य ।
वृन्दा स्त्री तद्विपिनं कुतस्तदीयं परं नः स्यात् ॥ ८४ ॥
वक्रिमैव भवद्वाचि दृश्यते न त्वलौकिकम् ।
वक्रिमा किल चन्द्रस्य धर्मस्तस्य दृशाग्रहः ॥ ८५ ॥
न्यायोऽपि पठितः किन्तु भवत्यातिविदग्धया ।
किमन्यायं पाठयितुमधुना त्वं समागतः ॥ ८६ ॥
तावद्विलम्बमसहिष्णुरमन्दमञ्ज-
त्काञ्चीकलापकलसिञ्जितमञ्जुगत्या ।
गोवर्धनाद्रिशिरसश्चपकोत्तरीय-
श्चन्द्रावलीनिकटमागमदम्बुजाक्षः ॥ ८७ ॥
मनोवचोऽगोचरलोचनान्तसौन्दर्यलेशं सुविचित्रवेशम् ।
स्मितश्रियाऽनङ्गविमोहनं सा ददर्श गोपेन्द्रकुमारमारात् ॥८८॥
वदनसुधानिधिसुषमाजलधिनिमग्नां दृशं कुरङ्गाक्षी ।
नाशकदुद्धर्तुं यत्नैरेव सहसा मनोऽप्यासीत् ॥ ८९ ॥
अपाङ्गविभ्रमोत्तुङ्गतरङ्गैस्तन्मनोदृशौ
अगाधे पतिते ह्यास्तामशक्ते बहिरागतौ ॥ ९० ॥
धम्मिल्लं वा दधिकलशिकां मूर्ध्नि संस्थापितां वा
तं मार्गं वा गमनमथवा कञ्चुकीमञ्चलं वा ।
देहं वा स्वं गृहमुत सखीवृन्दमेषा मृगाक्षी
योषायोषात्मजमपि तदा नाविदन्मोहितेव ॥ ९१ ॥
ततोऽनुकूलैरिव चत्वरङ्गैरपाङ्गपातैर्नितरांरिवात्र ।

१. अस्मान् समागत इति पाठ ।

जालैर्विशालैर्वचनैः स तस्याः स्वसंविदं सख्यकरोदुदारः ॥९२॥
अस्यास्तदा प्रेष्ठतमे यदासीचातुर्यधैर्यादिकमत्र युक्तिः।
नैवास्ति गोविन्दपदप्रतापानुभावमात्रेण विनेति मन्ये ॥ ९३ ॥

स्मेराननेन तरलाञ्चललोचनेन
स्निग्धेक्षणेन दरहासरुचा स्वगत्या।
किं वर्णितेन बहुना सखि पेशलैः स्वैः
सम्मुह्य तां रसिकतानिधिराड नाथः ॥ ९४ ॥

प्रबोधितेव गोविन्दवचनैः सापि सुन्दरी।
प्रत्युत्तरं ददौ सख्यः प्रत्युत्तरमनुत्तरम् ॥ ९५ ॥
कथं गच्छस्यदत्त्वैव दानं गोरसविक्रये।
सिञ्जत्काञ्चीकलापेन दर्शयन्ती स्ववैभवम् ॥ ९६ ॥
इयदवधि ते मदीया गतिरपि किं नावलोकिता सुभग।
पश्येत्थमिति वदन्ती पदानि कतिचित्सयन्त्यचलत् ॥ ९७ ॥
न सम्यगवलोकिता गतिरियं त्वदीया मया
मनाङ् निकटमागता निजगतिं पुनर्दर्शय।
अहो कुलवधूजनं निकटमाह्वयन्निर्भयो
भवान् जगति लक्ष्यते विपिनगोचरोत्युद्धटः ॥ ९८ ॥
अतः परं कुतो भीतिस्त्वत्सहायवतो मम।
स्वसहायीकरोत्येष मामेवाहो विपर्ययः ॥ ९९ ॥
गच्छत सख्यो गोकुलमेतद्वचं वदन्तु नन्दाग्रे।
त्वद्धर्मराज्यमार्गे न श्रुतिविषयोङ्गनाधर्षः ॥ १०० ॥
तत् किं व्याजेनैव स्वगृहं गन्तुं करोषि चातुर्यम्।
अहमासन्ध्यं गोप्यो गृहमपि गन्तुं न दास्यामि ॥ १०१ ॥
भवान् पुरुषभूषणः कथमु गोपिका त्वं वद-
त्यहो तदपि सावधि श्रवणमङ्गलं स्वात्मनि।
बहुत्वमपि ते कथं व्रजकुमार लोकोत्तरा

विभाति तव चातुरी विजितवादिजात्युत्तरा ॥ १०२ ॥
विश्वासमुत्पादयितुं स्त्रियोऽस्मान् ज्ञात्वा वदस्येवमयं मृगाक्षि ।
विनैव मद्वाचमये विशिष्टः श्वासो भवत्या भवति श्रमेण॥१०३॥
किमधिकमधिकं ब्रूपे कुलाङ्गनास्त्वङ्ग नेदृशं वचनम् ।
सोढुं शक्ताः परमिह किं कुर्मो नन्दराजसुते ॥ १०४ ॥
गोकुलेश गृहं गन्तुं न ददासि कुतः स्त्रियः ।
वृन्दावने मृगदृशां दानं लगति मामकम् ॥ १०५ ॥
अश्रुतपूर्वमिदं ननु किं तद्दानं लगत्यहो कुत्र ।
चरणे शिरसि करे वा पश्चादुत तद्वदास्माकम् ॥ १०६ ॥
अश्चलेनापि कञ्चुकया यद्गोपितमुरस्तव ।
तस्मिन्निति वदन् वीरः करेणास्पृशत्कुचद्वयम् ॥ १०७ ॥
कथं कुलवधूजनं स्पृशसि हन्त मर्मस्थले
न भीतिमवलम्बसे सकलसेतवोऽप्युज्झिताः ।
सरोजदललोचने सततमित्थमेवाङ्गनाः
स्पृशामि सखि ते कदा वसनसेतुरुल्लङ्घितः ॥ १०८ ॥
वचनोक्तौ द्विगुणितमुत करोषि कामं करीव हृतसेतुः ।
त्वद्वचनसहकृतं मत्करणं द्विगुणं भवत्येव ॥ १०९ ॥
वाक्चातुरीधुरीणं जानीमस्त्वां तु नन्दनृपसूनुम् ।
अतिदुर्ललितं परमिह दानं दधिषु श्रुतं नैव ॥ ११० ॥
किं नालिकेरफलभारसुताम्बुजाक्ष
पूगीफलान्युत कुरङ्गमदं नयामः ।
पटाम्बराण्युत यतो लगतीह दान-
मित्युद्धटं वदसि गोकुलपालक त्वम् ॥ १११ ॥
गोपीषु गोरसस्यैव गृह्णीमो दानमङ्गनाः ।
भवन्तः के कुलस्त्रीषु वक्तुं वचनमर्भकाः ॥ ११२ ॥

---

१. क पंक्ति पाठ ।

विपिनचारिणो वारिसंस्थितान् वदसि वा कथं वल्लवाङ्गने।
इयदवध्यदस्त्वत्स्वरूपमित्यहह नो मया ज्ञातमुत्तमम् ॥ ११३ ॥
व्याजः परं सुन्दरि गोरसस्य कुतोऽस्त्यमूल्यं किमपीह वस्तु।
उरःस्थलस्थायि नयस्यलक्ष्यं मदन्यपुंसो न तु तन्ममैव॥११४॥
सततं वृन्दाकाननमागच्छामः परं पयोदानम्।
नो जातु श्रुतमपि तत्तु कुतो वयं तेऽद्य दास्यामः ॥ ११५ ॥
अये यदद्यावधि चौररीत्या न दत्तमद्याहमशेषतस्तत्।
दानं ग्रहीष्यामि सरोरुहाक्षि क्षणं पुरा विश्रम तत्त्वयैव ॥११६॥
गता गावो दूरं प्रखरखुरचिह्नान्यपि वने।
न दृश्यन्ते हन्त द्रुततरमिहागच्छत ततः।
इति श्रीगोविन्दः प्रियवचनमाकर्ण्य सभयम्।
तदा गोपानाज्ञापयदुशति गोरक्षणविधौ ॥ ११७ ॥
गतेष्वखिलगोपेषु स्वेष्टमासीदिति प्रियम्।
अतिप्रमुदिताः प्रोचुः प्रेमातिशयनिर्भयाः ॥ ११८ ॥
विपरीतमहो वयमेव किल व्रजगोपनितम्बिनि चौरजनाः।
विपिने विजनेऽप्रमदा रुन्धन् वरसाधुजनः स्वयमेव परम् ॥११९॥
विपरीतं भवतीनां धर्मो नहि मे सरोजमुग्धास्यः।
तर्हि त्वत्तो दानग्रहणं युक्तं वतास्माकम् ॥ १२० ॥
बह्व्यो भवत्योऽहमिहैक एव करोमि किं तेन निजानुरूपम्।
दानं बलात्कारिषु देयमेवेत्युच्चैर्वदन्निन्दुमुखीं चुचुम्ब ॥ १२१ ॥
कथमेवं कुलस्त्रीषु करोषि विजने वने।
इत्यमित्यमिति स्मेरस्मितः प्रादान्नखं मुखे ॥ १२२ ॥
अङ्ग त्वदाननविलक्षणसौरभेण ताम्बूलरेखितकपोलयुगेन चाद्य।
सौन्दर्यसीमनखराङ्कितवक्षसा च युक्ता निजं गृहमुदार कथं गमिष्ये ॥
कथं हारः क्षुण्णः कथमु वलयानां विरलता

१. उर स्थलीकृत्य नयस्यलक्ष्यमिति, उर स्थले स्थाप्य नयस्यलक्ष्यमिति पाठद्वयम्।

विलम्बः केनासीद्दधिकलशिका कुत्र किमभूत् ।
प्रियेत्थं पृष्टाहं निजगुरुजनाग्रे सरभसं
किमाख्यास्ये स्त्रीणां परिजनवशो जीवनविधिः ॥ १२४ ॥
सत्यं स्त्रीणां जीवनमन्यायत्तं परं न गोपीनाम् ।
मदधीनमेव किन्तु प्रियसखि तत्ते कुतो भीतिः ॥ १२५ ॥
गोकुलमखिलं तावकमनन्यशरणं विशेषतो गोप्यः ।
किन्तु त्वामिह किञ्चित् कश्चिद्ब्रूयादियं भीतिः ॥ १२६ ॥
वशीकर्तुं प्रविष्टेयं वाणी गोविन्दमानसम् ।
नाशक्नोद्धहिरायातुं प्रेमपूरान्तरायतः ॥ १२७ ॥
व्याजं किमु ब्रूषे भावं प्रकटीकरोषि किं नैव ।
नान्यः शृणोति कश्चित् किं भयमवलम्बसे नाथ ॥ १२८ ॥
कृशाङ्गि दधिभाजनं शिरसि ते मनाग् द्रष्टुम-
प्यहं यत न पारये विपुलभारमाभाति मे ।
तदत्र विनिधेहि तत् क्षणमपाकुरु श्रान्तिम-
प्ययं मलयमारुतो वहति सोपि याच्त्वर्थिताम् ॥ १२९ ॥
कुसुमसुकुमाराङ्ग श्रीमत्युदारतरे मनाक्
त्वदुरसि वरं वासोप्येतद्वयं न सहामहे ।
क्षणमिह तदस्माकं हस्ते कुरु व्रजवल्लवी-
नयनकपयोनीरं नाथ त्वमस्यतिसुन्दरः ॥ १३० ॥
त्वमुत्तार्यनरपयोभाजनं स्वं सरोजाक्षि देयाशु दानं मदीयम् ।
व्रजेश त्वदीयोत्तरीयं नु कस्यै ददाम्येतदेयं कथं त्वद्वियोगात् ॥ १३१ ॥
धृत्वा निरःस्थं कलशं करेण स्थिते प्रिये कस्य पुरो वदामि ।
भग्नं भवत्येतदिति ब्रुवाणो न्यपातयद्भाजनमेकमुच्चैः ॥ १३२ ॥
तदा चन्द्रावल्या निजभुजयुगेन प्रियतमं
निरुध्यैवं प्रोक्तं व्रजमचिरतो गच्छ कथय ।

१. निरुध्येति पाठः ।

न गन्तुं शक्तोऽयं त्वदभिमुखमित्युद्भटतरं
निशम्यैकाऽगच्छद्व्रजमधिकृता नागररसे ॥ १३३ ॥
मया धृतेयं कमलाक्षि किं वानया धृतोऽहं वद तत्त्वमेव ।
समुच्चये नागर को विरोधो विना भवत्पीतदुकूलनीव्योः॥१३४॥
त्वमेव भव मध्यस्था वादिनोरावयोः सखि ।
युवयोर्बिसिनीसूत्रान्तरं नास्ति क मे स्थितिः ॥ १३५ ॥
खिन्ना भवति सखीयं त्वदङ्गसङ्गाभिलाषया सुभग ।
तत्कुरु मनोऽनुरञ्जनमस्या धैर्येऽप्यशक्तायाः ॥ १३६ ॥
त्वत्सङ्गागमनस्य प्रियसखि फलमेतदाविरासीन्नः ।
अन्यामपि निजसदृशीं कर्तुं वाञ्छस्यये किं नु ॥ १३७ ॥
तदा मुदा निजस्पर्शकरणे प्रसरत्करम् ।
नवप्रणयपूरार्द्रहृदया जगदुः प्रियाः ॥ १३८ ॥
मा मा मानद मा स्पृशेति वचसा ता वारयन्त्यः प्रियं
साकूतं करपल्लवेऽपि चिबुके वक्षःस्थलेऽप्यस्पृशन् ।
तत्कालीनविलक्षणेक्षणवशाद्द्राघामिये प्रेयसः
स्पर्शेणापि तथाविधेन वचनेनासंस्तदा तद्वशाः ॥ १३९ ॥
धृत्वाञ्चलं विविधपट्टमयप्रसून-
श्रीस्मारितस्मरनिकेतनतोरणं सः ।
वामेन चारुनखरेण करेण गाढं
तां प्राह गच्छ कथमालि गमिष्यसि त्वम् ॥ १४० ॥
स्मरस्मेरास्येन्दुं तरलतरतारे च नयने
स्मितं तत् साकूतेक्षणमतिमनोज्ञं मृगदृशाम् ।
नवप्रेमार्द्रार्द्रैरमुकुलितैरालि रहितै-
र्निमेषेणेक्षन्त्यो नयननलिनैस्तस्थुरचलाः ॥ १४१ ॥
सखि वद वाङ्मवदनं दृष्ट्वा श्रुत्वा च तदुदितं वचनम् ।
लोकत्रयेपि का स्त्री सम्मुग्धा नो भवेत् सुभगा ॥ १४२ ॥

भ्रूचापाहितलोचनाञ्चलशरव्रातैः पुरा विद्रुता-
स्तेभ्यः स्वोर्वैरणं कथञ्चिदपि नो दृष्ट्वा परावृत्य च ।
युध्यन्त्यः पृतना इव स्मरमहावीरस्य गोप्यस्तदा
पैश्यन्त्यः सखि चक्रकण्ठमखिलाश्चक्रुर्वशे स्वे हरिम् ॥१४३॥
तत्किमपि गोपिकासु प्रियेक्षणं प्रकटमालि तत्समये ।
सम्मोहमानशबलं भावं कमपि प्रियास्वकरोत् ॥ १४४ ॥
श्यामामृतजलधिं यद् गोपीनयनाञ्चलापगा मिलिताः ।
तत्सारूप्याद्वैक्यं प्राप्ता इव तास्तदाऽभूवन् ॥ १४५ ॥
मुग्धाननोपरि हरे परिवारिताहं
मुग्धाञ्चलं समभवत् पथि नो विलम्बः ।
यत्त्वन्मनोभिमतमङ्ग तदेव दास्या-
म्युल्लङ्घ्य गेहपतिमप्यतियत्नतोऽहम् ॥ १४६ ॥
एवं वदन्ती करपल्लवेन धृत्वा मृगाक्षी चिबुकं प्रियस्य ।
सङ्कोचितं स्वं करपल्लवं सा चुचुम्ब साकूतमथाब्रवीत् सः॥१४७॥
मदभिलषितमेतत् कञ्चुकीकुञ्चितं यत्
मददतिसरसं च श्रीफलश्रीविनिन्दत् ।
वितर किमपि तन्मे वस्तु सत्यं निजोक्तं
कुरु सखि तत एतत्स्वाञ्चलं चातिदूरे ॥ १४८ ॥
एवं ब्रुवन्नञ्चलमाचकर्ष प्रियस्तदा पाटितमीक्षमाणा ।
मृषा रुषा वाचमुवाच गोपी भीतेव सख्यो निजबन्धुवर्गात् १४९
नीविंघ्रमचैव मया नवीना सुलभमित्यङ्ग निजाङ्कलग्ना ।
कृता मुदासीदधुनैव सैवं कृता कथं गेहमहं व्रजामि ॥ १५० ॥
कथं चालितमञ्चलं तव वदेति पृष्टा गृहे
किमुत्तरमहं वदाम्यपि च नास्ति कश्चिन्मिषः ।

१. तथापि न समीक्ष्यन्त्य इत्यपि पाठ. कथञ्चिदपि नो दृष्ट्वेत्यत्र । २. वीक्ष्यन्त्य इति पाठः । ३. पाटितमीक्ष्य मिथ्रिदिति पाठः ।

सुगुप्तमिदमेव नो भवति हन्त किं ते कृतं
व्रजेशसुतकार्यमित्यपि वदात्र कोऽन्यो मिषः ॥१९१॥
स्वप्राणसङ्कटेऽपि त्वामभिधातुं न पारयामोऽङ्ग ।
नो जातु जातिकृपणो निजसर्वस्वं प्रकाशयति ॥ १९२ ॥
एतावता यदि बिभेषि तदा मदीयं
वासो गृहाण मयि कुर्विदयञ्चलं स्वम् ।
एषा तियुक्तिरतिमुग्धनितम्बिनीना-
मस्माकमङ्ग न भवत्युत नागरीणाम् ॥ १९३ ॥
नाहं वदामि वनमाल्यथ मौल्यमेव
दध्नो वदाङ्ग वरिवर्ति न मौल्यमस्य ।
यद्याग्रहस्तव तदोचितमस्य मौल्यं
मह्यं त्वमेव वितर स्मरमोहनाङ्ग ॥ १९४ ॥
हारावदाने सुभगाङ्गि मातुर्बिभेम्यहं तेन निजानुरूपम् ।
मौल्यं ददामीति वदंश्चुचुम्ब पूर्णं तवेदं समभून्न वेति ॥ १९५॥
व्रजनृपकुमार सरसिजसुकुमार कृतं तु साधु ते सर्वम् ।
त्यज वसनं ननु कश्चिद् द्रक्ष्यति पान्थो ह्ययं मार्गः ॥ १९६ ॥
लतागेहश्रेणीं विकचविविधाभासरुचिर-
प्रसूनप्रोद्भूतामलपरिमलोन्मत्तमधुपाम् ।
सरोजाक्ष्यन्येषां श्रवणमनसामप्यविषयं
मुदा पश्यावश्यं त्यज निजजनानां भयमपि ॥ १९७॥
निजशरपञ्जरगुप्तं स्वभावसर्वस्वमेव रतिभर्तुः ।
कुसुममयं न लतागृहमिदमिति मन्येऽहमेणाक्षि ॥ १९८॥
निकुञ्जनगरे मनोभवनृपोऽत्र धैर्यादिम-
त्समीरवरमन्त्रिणा सह पिकादिबन्दिस्तुतः ।
स्फुरत्सरसिजोन्मदभ्रमरयूथगीतो जय-

१. अधीति पाठः । २. हन्तेति पाठः ।

त्वपाङ्गशर एष सञ्चरति ते न यावत्परम् ॥ १५९ ॥
रतिप्राणेशोऽयं शशिवदनि तेऽपाङ्गसुषमा-
लवक्रीतो दासः सकमलतडागातिरुचिरम्।
स्वसर्वस्वेनेदं सदनमनुरूपं तव मुदा
चकाराङ्गीकारैः सफलय तदद्य प्रियसखि ॥ १६० ॥
निकुञ्जदुर्गे निजबाणसंहते कन्दर्पवीरः कलकण्ठकूजितैः।
मामाह्वयत्येष रणार्थमत्र तत्कुरु त्वमेवालि सहायमद्य मे ॥१६१॥
त्वदाननरुचा स्मरः सपदि लज्जितो निर्जने
वने भवनमेतदुत्तमतमं विधायास्थितः।
विचित्रकलकूजितानुनयवाग्भिरेनं मुदा
मया सह मदालसेक्षणविलक्षणे मानय ॥ १६२ ॥
त्वदीयनयनाञ्चलाशुगपराजितो विद्रुतः
स्मरः स्वशरसंहते वसति कुञ्जदुर्गे भयात्।
नितम्बिनि सुमध्यमे निजविहारवन्यैः क्षणा-
न्नियन्त्रितुमिहैव तं त्वमपि मत्सहायं कुरु ॥ १६३ ॥
अहमद्य सखि स्वार्थसिद्धिद्वारमिवान्तरम्।
कुचयोः प्राप्य ते प्राप्स्याम्यखिलाः कामसम्पदः ॥ १६४ ॥
चन्द्रावलि त्वन्मुखपूर्णचन्द्रमःसौन्दर्यसिन्धौ कति सन्ति सिन्धवः।
यत्पूर्वपूर्वातिविलक्षणाः क्षणे क्षणे तरङ्गाः मकरीभवन्ति ते १६५
त्वल्लोचनाम्बुजमिदं निजगर्भखेल-
च्चारोन्मदभ्रमरतस्तरलं कृशाङ्गि।
सौन्दर्यसीधु परितः किरति प्रिये यत्
तत्पारणा भवति लोचनभृङ्गयोर्मे ॥ १६६ ॥
मदीयनेत्राब्जविकाशकत्वामेन्दुर्न भानुः शशिकोटिशैत्यात्।
चन्द्रावलि त्वन्मुखवर्णनं तन्मन्ये कवीनां विषयो न वाचाम् १६७॥

१. मद्गुरुश्रीति पाठ।

यदतिशयितरागो मध्यनङ्गस्य तस्मा-
न्निजरसशरचापावध्यशेषं स्वकीयम् ॥
प्रकटमिह मदर्थे पञ्चकारातिगुप्तं
तदिदमतिमनोज्ञं त्वन्मुखाब्जं विभाति ॥ १६८ ॥
मन्मानसं वशीकुर्वद्विभाति तिलकं तव ।
भ्रूचापाहितकन्दर्पकाण्डखण्डं इवाद्भुतः ॥ १६९ ॥
चन्द्रत्वे तु चकोरता मधुपता पङ्केरुहत्वे दृशो-
र्मीनत्वं वदनस्य ते निरुपधिस्नेहाम्बुतायां सखि ।
सौन्दर्यामृतता यदाऽनिमिषता दिव्या तदेत्येतयो-
स्तत्त्वं तावत्सेक्षणे भवति नो निर्धारितं साम्प्रतम् ॥१७०॥
शीकरसहितः शुण्डादण्ड इवानङ्गवारणस्येयम् ।
वेणी विभाति मुक्ताश्रेणी गुच्छातिशुभ्राग्रा ॥ १७१ ॥
लोकोत्तरा हृदयकोमलता तवाभा-
त्यम्भोरुहाक्षि नवपुष्पमयोपि बाणः ।
अन्तर्गतस्तुदति यच्छमनाय तस्य
मां तत्र कुर्वगदराजमिवामृताभम् ॥ १७२ ॥
करचरणनखरचन्द्रश्रेणी लब्धा मया धृता समये ।
चन्द्रावलि स्वकीयं नामान्वर्थं कुरुष्वाद्य ॥ १७३ ॥
भापितहसितविलोकितविलसितवदनाङ्गसङ्गचन्द्रैस्त्वम् ।
शिशिरय चन्द्रावलि मां नामान्वर्थं कुरु स्वीयम् ॥ १७४ ॥
प्रथमः सङ्गम इति ते मदुपायनमेव हृद्यफलयुगलम् ॥
आनीतमतिमनोहरनूपुररवमङ्गलोद्घोषैः ॥ १७५ ॥
विलम्बितं त्यजाम्भोजनयने मन्मनोरथम् ।
पूरयाद्य सखीवृन्दसहिता मुदमाव्रज ॥ १७६ ॥
वदनसुधानिधिगलितामृतमिव वचनं प्रियस्य ताः श्रुत्वा ।

१. स्वयं वै इति च पाठः । २. चन्द्र इति पाठः । ३. निरुपधीति पाठः ।

सर्वेत एव वशीकृतहृदया वदनं मिथोपश्यन् ॥ १७७ ॥

ततः सहजनिर्भरप्रणयपूरसम्प्लावित-
त्रपाधृतिभयाः कृशाङ्गि परिवव्रुरत्युत्सुकाः ।
स्वपाणिकमलैश्च तं चिबुकबाहुगण्डद्वये
स्पृशन्त्य इव वारिधौ निपतिता बभूवुः प्रियाः ॥ १७८ ॥

प्रियापाणिस्पर्शोदितपुलकपालिः समुदित-
स्वभावोद्गारिण्या रसवलितयार्द्रालसदृशा ।
प्रियः पश्यन् वक्त्रं व्रजवरवधूनां विकसित-
स्मितस्मेरं राधा सहचरि चिरं तत्त्वमभजत् ॥ १७९ ॥

गोपीकपोलमुकुरप्रतिबिम्बितस्व-
रूपावलोकनततिस्मृतरासलीलः ।
आनन्दसिन्धुलहरीभिरिव प्रियाभि-
र्युक्तः प्रियः समचलत् स्वनिकुञ्जदेशम् ॥ १८० ॥

प्रियांसदेशे निहितप्रकोष्ठो विचित्रलीलः करपल्लवाभ्याम् ।
कुर्वंश्चकार प्रमदोत्तमासु प्रगल्भभावं कमपि स्मरस्य ॥ १८१॥

तदानीं या शोभा समजनि हरेस्तां निगदितुं
न शक्ताहं किन्तु शृणु वचनमेकं मम सखि ।
यदुत्थाप्योत्थाप्य स्वपदकमले स्थापयति तत्
त्रिलोकीस्त्रीमानं शशिवदनि संक्रामयति सः ॥ १८२ ॥

लतागेहाङ्गणेऽनेकतरुपल्लवपालिते ।
[illegible] विवेश प्रियस्ताभिः स्वोत्तरीयकृतासने ॥ १८३ ॥

स्मितस्मेरास्येन्दुस्तरलितदृगम्भोजयुगलः
परीहासं कुर्वन्नतिरसविकासं व्रजपतिः ।
प्रियः प्रोवाच स्वोचितमखिलदानं वितर मे
गृहाणेत्युच्चैस्तं शशिमुखि चुचुम्ब व्रजवधूः ॥ १८४ ॥

---

१. दत्तेति पाठः

उदारहासोदितदन्तपङ्क्तिप्रकाशसन्दीपितकामभावाः ।
तदा यशोदासुतमानसे नो धैर्यं स्थिरं ताः स्वदशापि चक्रुः ॥१८५॥

करे धृत्वा गोपीं कुसुममयकुञ्जान्तरगतः
प्रियायुक्तः पुष्पैर्नवकिशलयैराशु शयनम् ।
विचित्रं निर्माय स्वयमुदितभावः स्वसमया
मुदा चन्द्रावल्यारमत परमोदारचरितः ॥ १८६ ॥

विपुलपुलकः सीत्काराविर्भवद्रसधारया
मदनसदनाक्रान्तिश्वासोदयातिमनोहरः ।
रभसहसितोदञ्चद्भावप्रभावविलज्जया
रसभरचलद्दृष्टिर्लज्जाविलोलदृशारमत ॥ १८७ ॥

पिककलरवकूजिता कृशाङ्गी कृतघनचुम्बनदन्तदंशभेदा ।
रुचिरविविधवन्यविभ्रमोद्यत्कुसुमजलपालिररीरमद्व्रजेशम् ॥१८८॥

प्रियाङ्गसङ्गेन मयेदृशो रसः प्राप्तः प्रियः कीदृशमाप्तवानिति ।
ज्ञातुं महत्त्वेव नितम्बिनी तदा तद्भावतः प्राप चिरं तदेकताम् १८९॥

कथं नु कृत्रिमो भावः स्थिरो भवति भामिनि ।
यदन्ते सा निजं भावमभजल्लज्जितस्मितम् ॥ १९० ॥

ईषन्मुकुलितनयनं विगतारुणिमाधरं सरोमाञ्चम् ।
श्रमशीकराञ्चितं तद्वदनं धन्यः पिबत्येषः ॥ १९१ ॥

रतिरसजलनिधिविभ्रमतरुणतरङ्गेषु पातितः प्रियया ।
पारं न प्रापायं यदसितचन्द्रः स्वयं पूर्णः ॥ १९२ ॥

न सोढुं शक्तोऽभूत् स्वनयननिमेषान्तरमपि
प्रियावक्त्रं पश्यन् मलयजमयीमां सखि पिबन् ।
प्रियापि प्राणेशं हृदयगतमालिङ्ग्य सुचिरं
समाधिस्थावस्थां समधिगततत्त्वाभजदियम् ॥ १९३ ॥

वेणीग्रथनमारभ्य चरणालक्तकावधि ।
प्रिययोक्तः सखि मेयानलङ्करणमातनोत् ॥ १९४ ॥

ततः प्रियेण स्वकनीनिकानखे मुखेन्दुमादर्श इव प्रदर्शितम् ।
चन्द्रावली वीक्ष्य मुदा तदाननं दरत्रपास्मेरदृशा समैक्षत॥१९५॥
तदातिहर्षोत्पुलकानुकूलं कपोलमानन्दसुधानिधानम् ।
चुचुम्ब गाढं सकचग्रहं तत् सीत्कारधारामुदिताशयः सः १९६॥
विविधप्रसूनसङ्कुलकुञ्चितकेशाञ्चितं तनूष्णीषम् ।
अधिदक्षिणभ्रु किञ्चिन्नतमतिमुदिताकरोत् प्रेष्ठे ॥ १९७ ॥
मृगमदतिलकं पुलकोद्यतिमति भाले विधाय तन्मध्ये ।
निजमुक्ताफलबिन्दुं सुन्दरमकरोत् कृशाङ्गेषा ॥ १९८ ॥
कर्पूरकुङ्कुमकुरङ्गमदादियुक्तै-
रारभ्य सुन्दरकपोलतलं तदीयम् ।
पादाम्बुजावधि कलानिधिचारुवक्रं
पश्यन्त्यलिम्पदुरुधा सखि चन्दनैः सा ॥ १९९ ॥
कुचकुङ्कुमपङ्केन पङ्किलं स्वोत्तरीयकम् ।
बबन्ध सा नितम्बेऽस्य तन्वङ्गी चिरराञ्जनम् ॥ २०० ॥
ततश्चित्रं चरणयोः कुरङ्गमदकुङ्कुमैः ।
चकार चन्द्रवदनी नूपुरद्वयमुग्धयोः ॥ २०१ ॥
हृदि स्वनिष्काभरणं प्रियस्य निधाय हारानपि कुङ्कुमाद्यैः ।
विचित्रतां पुष्पमयस्रजं तत्कण्ठेऽकरोत्कुण्डलमण्डितास्या॥२०२॥
कर्णिकारकुसुमं सुभगाङ्गी कर्णयोः सखि निधाय मुरारेः ।
गण्डमण्डलयुगे तनुरेखं चित्रमद्भुतमतीव चकार ॥ २०३ ॥
प्रियानासापुटे चारु स्वनासापुटभूषणम् ।
कृत्वा स्वयं परिदधौ तदीयं प्रमदोत्तमा ॥ २०४ ॥
ततस्तादृग्रूपं शशिवदनि दृष्ट्वातिमुदिता
हाधीरेवालिङ्ग्य प्रियसखि चुचुम्ब प्रियमुखम् ।

१ अधिभ्रुमि विलोक्यानिविदितेति पाठ ।

न जाने कीदृग्वा सुखमभवदस्या हृदि तदा
दृशोर्नाथस्यापि प्रणयभरपूर्णस्य सुहृशः ॥ २०५ ॥
स्वविलासलवक्रीतकन्दर्पा व्रजसुन्दरीः ।
एवमेवाखिलाः श्रीमान् कृष्णो रेमे रसप्रदः ॥ २०६ ॥
अस्माकं [redacted] जगत्त्रयेऽपि सुभगे नापेक्षितं किञ्चिद-
प्येतावत्परमम्बुजाक्षि सततं सम्प्रार्थनीयं मुहुः ।
इत्थं शश्वदनिन्द्यपङ्कजदृशा नन्दात्मजः सुन्दरः
सर्वस्वार्पणधीरया स रमतामस्मत्कृते सद्मनि ॥ २०७ ॥
राधाचन्द्रावलीगोपीदासीकथितमद्भुतम् ।
सम्पूर्णमभवत् कुञ्जे शृङ्गाररसमण्डनम् ॥ २०८ ॥
इति श्रीमद्व्रजेशस्य तत्प्रियाणां च वाञ्छितम् ।
मिथः सर्वस्वदानं श्रीविठ्ठलः स्वाश्रयेऽकरोत् ॥ २०९ ॥

इति श्रीगोपीजनवल्लभैकतानश्रीविट्ठलदीक्षितविरचिता
दानलीला सम्पूर्णा ॥

---

१ अयं श्लोकः संवत् १६५० वर्षे लिखितपुस्तके पश्चात् टिप्पणरूपेण लिखित, अन्यप्राचीनपुस्तके मंगलभट्टलिखिते [redacted] नास्ति, अतोऽयं श्लोकः पाश्चात्य इति प्रतिभाति, तथापि टीकाकारैः श्रीगोकुलोत्सवैर्विवृत इति मूलेऽस्माभिर्निवेशित इति ।
२. सम्मतमिति पाठः क्वचित् ।

श्रीकृष्णाय नमः ।

श्रीगोपीजनवल्लभाय नमः ।

श्रीमदाचार्यचरणकमलेभ्यो नमः ।

# शृङ्गाररसमण्डनम् ।

## दशोल्लासः ।

श्रीमत्प्रभुचरणप्रकटितः ।



### प्रथम उल्लासः ।

कथय कथय स्वामिन्या मे कथं नवसङ्गमः
  सुमुखि समभूद्गोविन्दस्येन्दिराधिकराधया ।
सखि विदितमेवैतत्ते किं ब्रुवे यदियं कथा
  व्रजवरवधूदासीनां नः कृशोदरि जीवितम् ॥ १ ॥

स्मृतनिजनिजस्वामिन्यस्ताः स्वभावजनिर्भर-
  प्रणयपुलकोद्भिन्नाङ्ग्यः साश्रुलोलविलोचनाः ।
व्रजपरिवृढक्रीडाम्भोधेः परस्परमन्तुभिः
  सुखितहृदयाः सिञ्चन्त्यः श्रीमनोप्यहरंस्तदा ॥ २ ॥

यद्दत्ताविर्भूतश्चिरनिभृतभाग्यैर्व्रजदृशां
  यशोदायां प्राचीदिशि सकलतारापतिरिव ।
तदैवासामासीत् सहजरतिरस्मिन् मधुरिपोः
  परं राधायां सख्यविशयितरागः समजनि ॥ ३ ॥

कदाचित् कालिन्दीपुलिननलिनामोदधनिना ।
  प्रेमोद्माधुर्यमशिथिलसमीरेण ललिते ।

---

१. समीरेणानन्दस्थगितगतिधीरेण ललिते इति, समीरेणानन्दस्थगितगति-धीरेण ललिते इति पाठद्वयम् ॥

मुदा वृन्दारण्ये निजसहचरीवृन्दसहिता-
गता राधा गोपीशतवृतमपश्यद्व्रजपतिम् ॥ ४ ॥
चिरं चेतस्तस्या हरिवदनलावण्यजलधा-
वगाधेऽभूद्राधासहचरि निमग्नं सहदृशा ।
तदा सारङ्गाक्ष्या वदनवरचन्द्रे मधुरिपो-
श्चिरादिष्टे दृष्टिर्न्यपतदनिमेषातिरुचिरा ॥ ५ ॥
यदैवास्या गोपीपरिवृढदृशा दृष्टिरमिल-
त्तदैवाभूद्भावः प्रणयिनि स कोपि प्रियगतः ।
यतः स्तम्भस्वेदोत्पुलकविवशत्वादय इमे
स्फुटा भावास्तस्यां प्रियसखि बभूवुर्न चिरतः ॥ ६ ॥
नवप्रेम्णा पूर्णे हृदि निरवकाशेपि सुदृशः
प्रियापाङ्गानङ्गप्रहितशरसन्दोहवितति: ।
गतान्तः साजात्यात् सुमुखि यदसौ तेन कठिनः
कृशाङ्ग्याः सन्तापः समभवदहो वागविषयः ॥ ७ ॥
चिरादासक्ता सा कृशतनुरशक्ता धृतिकृतौ
तदा राधा बाधाशतवलितभावा प्रियसखि ।
क्वचित् कुञ्जे गुञ्जन्मधुपमुखरे धीरपवना-
श्रिते लीना दीना निजसहचरीं प्राह ललितम् ॥ ८ ॥

मल्हाररागेण गीयते ।

सह विहरति युवतिभिरिह सहचरि हरिरतिकोमलानिले सेवति ।
किमु कथयामि वागविषयो मम मनसि परं खेलति ॥ १ ॥ ध्रुवपदम् ।
वदनकमल एव रुचिरहसिते दृष्टिपतदपगतधृतिगतिरेव ।
अङ्गमपरमनङ्गकोटिरुचिरतरं मया[1] न दृष्टमेव ॥ २ ॥
मदन एवायमिह प्रकट इति जाने नयनकुसुमशरैर्यदति दुनोति ।
इत्थमधीरराधिकाकथितं शुभं वितनोति ॥ ३ ॥

---

१. मयेति नास्ति ।

सकृद्दृष्टं दूराद्वदनकमलं गोकुलपतेः
कथञ्चिन्मे मुग्धस्मितमनुपमं दर्शय पुनः ।
तदा किं ते देयं वद सखि वरीवर्ति भुवने
परं प्राणाः स्युर्मे मधुरिपुदृशा ते वत हृताः ॥ ९ ॥
इत्थमसकलाक्षरं तन्निगदितमाकर्ण्य सहचरी चतुरा ।
राधामवोचद्दूरान्माधवमुपदर्शयन्त्यालिः ॥ १० ॥
वसन्तरागेण गीयते ।

हरिरिह व्रजयुवतीशतसङ्गे ।
विलसति करिणीगणावृतवारणवर इव रतिपतिमानभङ्गे ॥ १ ॥ध्रु०॥
विभ्रमसम्भ्रमलोलविलोचनसूचितसञ्चितभावम् ।
कापि दृगञ्चलकुवलयनिकरैरञ्चति तं कलरावम् ॥ २ ॥
स्मितरुचिरुचिरतराननकमलमुदीक्ष्य हरेरतिकन्दम् ।
चुम्बति कापि नितम्बवती करतलधृतचिबुकममन्दम् ॥ ३ ॥
उद्भटभावविभावितचापलमोहननिधुवनशाली ।
रमयति कामपि पीनघनस्तनविलुलितनववनमाली ॥ ४ ॥
निजपरिरम्भकृतेनुद्रुतमभिवीक्ष्य हरिं सविलासम् ।
कामपि कापि बलादकरोदग्रे कुतुकेन सहासम् ॥ ५ ॥
कामपि नीवीबन्धविमोकससम्भ्रमलज्जितनयनाम् ।
रमते सम्प्रति सुमुखि बलादपि करतलधृतनिजवसनाम् ॥ ६ ॥
प्रियपरिरम्भविपुलपुलकावलिद्विगुणितसुभगशरीरा ।
उद्गायति सखि कापि समं हरिणा रतिरंसरणधीरा ॥ ७ ॥
विभ्रमसम्भ्रमगलदञ्चलमलयाञ्चितमङ्गमुदारम् ।
पश्यति सस्मितमपि विस्मितमनसा सुदृशः सविकारम् ॥ ८ ॥
चलति कयापि समं सकरग्रहमलसतरं सविलासम् ।

१. निधुवनेनेति पाठः । २ रतिरणधीरेति पाठः सर्वत्र ।

राधे तव पूरयतु मनोरथमुदितमिदं हरिरासम् ॥ ९ ॥

श्लोकः—कुवलयदलकोमलाङ्गसङ्गमकटमनोभवभावसुन्दरीभिः ।
विलसति सरसे कलिन्दकन्योपवनभवत्पवने वहत्युदारः ॥११॥

कलिन्दतनयातटोन्मदमधुव्रतास्वादित-
प्रसूननवपल्लवाञ्चितमनोहराकल्पकः ।
स्फुरन्मुरलिकाकलस्वनविमुग्धगोपीजनो
मनोरथशतं हरिः सखि तनोतु पूर्णं तव ॥ १२ ॥

इति श्रीविट्ठलेश्वरविरचिते शृङ्गाररसमण्डने प्रथम उल्लासः ॥ १ ॥

## द्वितीय उल्लासः ।

विहारानान्दोलत्रुटदमलहारान् व्रजपते-
श्चिरं दृष्ट्वा मत्तो रतिरतिशयान्याशु समभूत् ।
इतीर्ष्यातः स्थातुं न समशकदासक्तिवशतो
न गन्तुं चेत्थं सा चिरमभवदान्दोलितमनाः ॥ १ ॥

ततोऽन्यत्रागत्य क्वचिदपि लताकुञ्जभवने
मरन्दोन्मत्तालिध्वनितशिखरे धीरपवने ।
निसर्गस्नेहार्द्रे सखि मुकुलयन्त्यम्बुजदृशौ
मुहुः काचिद्राधा निजसहचरीं माह रहसि ॥ २ ॥

कल्याणरागेण गीयते ।

मानसमिदमपि क्षणमालि त्यजति न हरिरातुरमति।
विविधविलसितचारुनयनविशिखविनिहतगति ॥ १ ॥ ध्रुवपदम् ।
कलमुरलीनादमोहितयुवतीवृन्दविलसितवक्षगम् ।
मम नयनयोरपि मुखमादधतं चित्रीकृतनरमृगविहगम् ॥ २ ॥
मदद्विरदमन्थरा सुमुखि सा गतिस्तत्स्मितं
मनो भवति मोहनं किमपि चारु चार्द्रेक्षणम् ।
मुखेन्दुसुषमा च सा वचनचातुरीमाधुरी-

१. वहत्यभीक्ष्णमिति पाठ.। २. करोतीति पाठः। ३ मुररे इति पाठ.।

जितामृतचया बत त्रिभुवनेपि नैवास्त्यहो ॥ ३ ॥
प्रियाया यो मुक्ताफलविरचितो बिन्दुरमलः
स्वभाले कस्तूरीतिलकरुचिरे केलिकुतुकात् ।
धृतः स्वप्रेम्णेन प्रियसखि परीवर्तमुभयोः
स्वरूपस्य ब्रूते किमपरमितो वाच्यमधिकम् ॥ ४
उद्गायतोपि गोपीनिर्भरपरिरम्भविपुलपुलकालेः ।
स्थिरतरतरलग्रीवानासाभूपे मनो हरतः ॥ ५ ॥
वक्रग्रीवमुदञ्चदङ्गुलिचलद्भ्रूवल्लिवक्रेक्षणं
कुञ्चच्छोणतराधरं मुरलिकामुत्फुल्लनासापुटम् ।
व्येत्यस्ताङ्घ्रि यदा सुधाधरसुधापूरैरलं पूरय-
त्यम्भोजाक्षि न लक्षये त्रिभुवने किं कर्तुमिच्छत्यसौ ॥ ६ ॥
आस्तां तावदनङ्गकोटिमदहृन्मत्यङ्गवार्ता हरेः
संस्थानं किमु वर्णयामि सुषमाधाम त्रिभङ्गस्य यत् ।
मद्दृष्टेर्वपुषो विवेकिमनसो मन्ये गतीनामयं
भङ्गः प्रादुरकारि कोपि विधिना येनाहमेतादृशी ॥ ७ ॥
सहासभाषणामोदमदान्धमधुपावृतः
न वेणुं पूरयत्येष किन्तु मामधरामृतैः ॥ ८ ॥
अपि च—मामेवाधरसीधुना मुरलिकाव्याजात् प्रियः पूर्वं-
श्वेतोपि व्यवधायकं वरतनोर्मा भूदिहेत्यग्नपि ।
यच्चेतो हृतवान् स्वयं निजरसं चापूरयत्तेन मे
तद्भावस्तु सुदुर्निवारतर एवायं करोम्याहि किम् ॥ ९ ॥
केदाररागेण गीयते ।
कथमपि मधुमथनं मया सह मनोभवकोटिरुचिरम् ।
रमय कामरसमप्यारस नय रसिकं सुचिरम् । ध्रुवपदम् ।
कुञ्जे निलीयरचितकुसुमशयनं गतया कथमपि रहसि ।

१. व्यत्यस्तां ह्रीति पाठः ।

रतिरभसेन हसन्ती मामपलज्जितया चारुभावे चेतसि ॥ ९ ॥
चाटुकृतावतिचतुरं मृदुतरमतिमन्दहासभाषितया ।
शिथिलीकृतमद्वसनं कुसुमितशयने निवेशितया ॥ १० ॥
मदुरसि कृतशयनं कृतपरिरम्भणचुम्बनादिकया
कृतमधुराधरपानं रतिरणधीरातिधीरयोत्पुलकम् ॥ ११ ॥
विविधबन्धविशारदमानदं जितपिकध्वनिकूजितया सखि ।
श्रमकणाञ्चितमुग्धमुखाम्बुजं तदधरामृतपानमदश्रिया ॥ १२ ॥
अर्धस्रस्तदुकूलमर्धतिलकस्वेदाङ्कुराधश्लथत्-
पुष्पालीरुचिरालिकातिमधुरेणास्येन्दुना मोहनम् ।
रासाधिक्यमदातिवक्ररुचिरभ्रूवल्लिमद्वल्लवी-
वृन्दापाङ्गवशं सुनिर्वृतिपदं गच्छामि पश्यन्त्यपि ॥ १३ ॥
कल्पप्रसूनसौरभ्यकालिन्दीकणविस्तवान् ।
सुखयत्यनिलो नापि तच्चरेणेव मन्थरः ॥ १४ ॥
विकचविविधपुष्पपालिरेषा सह शिशिरांशुकरैर्दहत्ययमन्दम् ।
कथमपि न सुखं करोमि किं वा वद सखि मत्प्रियसङ्गमः कथं स्यात् ॥१५॥
क्रीडाम्भोधौ विविधतरुणीविभ्रमापाङ्गवीचि-
सन्दोहान्दोलितनवनवस्नेहपूरार्द्रसर्वैः ।
अम्भोजश्रीमदनमदहृत्वन्मुखाब्जावलोक-
मोद्यल्लज्जास्मितरुचिरयं पूरयत्वाशिषं ते ॥ १६ ॥
इति श्रीविट्ठलेश्वरविरचिते शृङ्गाररसमण्डने द्वितीय उल्लासः ॥ २ ॥

## तृतीय उल्लासः।

मधुसूदनोपि राधामाधाय हृदि स्वकेलिमप्येनाम् ।
विजह्रे रसिकशिरोमणिरत्यासक्त्या ह्यधीर इव ॥ १ ॥
साक्षादनुनयकरणे सव्रीडः प्रणयकोपभीरुस्ताम् ।
परितोतुमुत्य कुत्रचिदासीनोऽचिन्तयद्विविधम् ॥ २ ॥

---

१. दृश्यं नाविदवातिश्रप इनेति पाठ.।

हरि हरि किमभूदिदं नु कुर्यां किमु वानादरकोपतश्च राधा।
चिरविरहभरेण किं करिष्यत्यहह कथं वत सा भवेत् प्रसन्ना॥३॥
कुपितकुटिलभ्रूवल्ली सा मुखोणतराधर-
स्फुरणमरुणक्षेहार्द्रार्द्रातिचञ्चलमीक्षणम्।
रभसचलितस्रंसच्चञ्चद्दुकूलनियन्त्रणं
त्यजति न मनस्तद्रम्भारम्भोरुश्रियमाग्रहि॥ ४॥
कुपितारुणं त्वदीयं लोचनयुगलं विचारयामि मृशम्।
कुवलययुगलमिवारुणपरागपूरारुणं चारु॥ ५॥
त्वद्भ्रूचापाहितापाङ्गशरसन्दोहजा व्यथा।
शाम्येत् त्वदधरास्वादभेषजेनैव नान्यथा॥ ६॥
सुमुखि स्वीयं मत्वा मामिह निजवागमृतपूरैस्त्वम्।
सिञ्चाथ करसरसिजस्पर्शेनापाकुरुष्व तापं च॥ ७॥
विना त्वत्करुणावीचीलसल्लावण्यसागरम्।
न मन्मनोमहामीनो विहर्तुं कुत्रचित् क्षमः॥ ८॥
वदत्येवं नाथे प्रणयभरभारातिशिथिले
रसाले कालिन्दीतटवनिकुञ्जेतिविशदे।
समासीने राधाप्रियसहचरी काचिदवदन्
निजस्वामिन्यास्तत्प्रचुरतरदुःखं मिषकृतम्॥ ९॥

कानररागेण गीयते।

हे सुभग ते विरहे सा सीदति।
अतिदीना सुकुमारी शीतांशुमपि परिनिन्दति। ध्रुवपदम्।
त्रिगुणानिलमपि दहनमाकलयति चन्दनमपि विन्दति खेदम्।
नामैव ते नाथ कथयति कथमपि निजदेहमपि जानाति नेदम्॥ १॥
त्वत्प्राणा जीवतीह त्वल्लीलाविष्टा विचेष्टते।
त्वत्स्फूर्तितानुपङ्गेण गृह्णाति तव नाम सा॥ १०॥
चकितनयनं पश्यन्त्यूर्ध्वं निरीहतनुर्नभस्-

त्वदुदितमहाचिन्तामग्ना तिरोहितवाक् चिरम्।
भुवनदहनत्रासाच्छ्वासं कथञ्चन मुञ्चति
त्वदमिलनदावाग्निज्वालाशिखामिव सुन्दर ॥ ११ ॥
त्वद्विरहमर्मभारणमूर्छामाप्ता कथञ्चनोद्बुद्धा।
भवति त्वदीयकृपया परं किमस्माकमुपचारैः ॥ १२ ॥
पाटीरपङ्कमेषा विषमिव शीतांशुसरसिजे चाग्नी।
कलयति पाशं कण्ठे स्रजमपि हारं महाभारम् ॥ १३ ॥
अधिधरणि लुठति नाथ त्वद्विरहेणातिविह्वला राधा।
विलपति रोदिति पङ्कजमुकुमाराङ्गी त्वदीयापि ॥ १४ ॥
अतिदीना त्वामेव स्वहृदि पुरस्थं विधाय संनत्वा।
न प्रार्थयते स्वीयं जीवनमधिकं किमु श्राव्यम् ॥ १५ ॥
निगदत्यनुपदमचिरं त्वदीयपादाब्जमेव शरणं मे।
जीवय वा मारय मां निजाङ्गसङ्गेन विरहेण ॥ १६ ॥
रोमाञ्चति सीत्कुरुते कृशतनुरुत्कम्पते चिरं सुभग।
ताम्यति मीलति पतति प्रयाति मूर्छेत्यतीवार्ता ॥ १७ ॥
एतावत्यतिविषमज्वरे त्वदीयाधरामृतेनैव।
जीवेत् कृपयसि चेत्त्वं नो चेत् किमहं ब्रुवे दीना ॥ १८ ॥
आसारपीडितनिजव्रजरक्षणाय
लीलोद्धृताचलशिरोमणिरार्द्रचित्तः।
कुर्यान्मनोरथशतं परिपूर्णमेनं
तापं हरत्वचिरतः सखि राधिकायाः ॥ १९ ॥

इति श्रीविठ्ठलेश्वरविरचिते शृङ्गाररसमण्डने (श्रीकृष्णचन्द्रं प्रति दूतिकावचनं नाम) तृतीय उल्लासः ॥ ३ ॥

## चतुर्थ उल्लासः ।

अहमिह निवसामि स्वामिनीमानयेथा
मदनुनयवचोभिर्मा चिरं याहि राधाम् ।
इति मधुरिपुणा सा सार्द्रचित्तं नियुक्ता
स्वयमेतिचतुरेदं प्राह राधामुपेत्य ॥ १ ॥

कल्याणरागेण गीयते ।

नन्दसूनुरपिह तव विरहे न राधे सुखयति कथमपि किमपि सम्प्रति ।
तव नामैव विलपति बहुतरमतिविषमं शशिनमपि निन्दति ॥ ध्रुव० ।
यद्गतिचिन्तनेन स्वदंगमाप सा तेन त्वदार्तिमपि सकलां प्राप्नोति ।
किमधिकमालि कथयामि सुकुमारोति ॥ १ ॥
स्वरसम्मुद्धां झङ्कृतिमपि कुरुते नन्दसूनुरायातः ।
इत्युक्ते स्वावस्थामनुसन्धत्ते सखि प्रेयान् ॥ २ ॥
रूपं तवैतदतिसुन्दरनीलमेघ-
मोघत्तडिन्मदहरं व्रजभूषणाङ्गि ।
एतत्समानमिति पीतवरं दुकूल-
मूरावुरस्यपि निभर्ति सदा स नाथः ॥ ३ ॥
अधराञ्जनदीप्तिभिः सुनासापुटमुक्ताफलभूषणं तवास्य-
सदृशं भवतीति गोपि गुञ्जाफलमुच्चैरुरसि प्रियो बिभर्ति ॥४॥
किमित्येतावन्तं विषमशरतापं नु सहसे
चल प्राणप्रेष्ठं मिल विरहतापं च शमय ।
तमप्यन्तः सन्तोषय वचनपीयूषनिचयै-
र्मुदा गोविन्दाङ्के विलस सखि कामं चिरमिह ॥ ५ ॥
अभनि रजनिरेषा सान्द्रमासीत्तमस्तत्
त्यज सुमुखि विलम्बं नीलनीवीं विधेहि ।

---

१ स्वयमपीति पाठ ।

प्रतिपदमतियत्नं नूपुरे मूकयन्ती
चल कुरु वलयादीन्यञ्चलेनावृतानि ॥ ६ ॥
विविधकोमलपल्लवनीरजस्थलजपुष्पदलैः सुभगः स्वयम् ।
शयनमालि विधाय तवागतिं चकितदृष्टि मुहुर्मुहुरीक्षते ॥ ७ ॥
शनैर्गत्यायास्यत्यनु नतदृशा द्रक्ष्यति च मां
समालिङ्ग्य प्रीत्या रतमपि विधास्यत्यतिचिरम् ।
इति स्वान्तश्चिन्ताशतवलितभावोऽपि स तदा
तदा तत्तद्रूपो भवति तदयं केवलरसः ॥ ८ ॥
एतादृशो हरिरयंमभिसरावि त्रिगुणमारुते वहति ।
किमतः परमधिकसुखं वद त्रिलोक्यां वरीवर्ति ॥ ९ ॥
जानासि स्नेहरीतिं तदनु मधुरिपोर्निर्भरस्नेहमास्म-
न्यस्यन्तार्द्रार्द्रता च प्रियतमहृदयस्यासि दूना स्वयं च ।
तत्रागन्तुं तथापि त्वमिह न मनुषे तत्र हेतुं न जाने
मानाम्भोधेरपीत्थं सरसिजनयने सेतुरुल्लङ्घितस्ते ॥ १० ॥
इति श्रुत्वा तस्या वचनमरुणार्द्राञ्चलदृशा
ऽपश्यन्ती दूतीं विरहभरदीनार्द्रकुपिता ।
शनैरर्धस्पष्टाक्षरमवददम्भोयुतदला-
न्युरस्यम्भोजानां प्रियसखि वहन्ती कथमपि ॥ ११ ॥
किमेवं दूति त्वं वदसि युवतीयूथवलितः
स तु स्वच्छन्दं तद्विलसितवशो हन्त रमते ।
तदस्त्वेवं किन्तु प्रियविरहतप्तं तदधरा-
मृतं शीतं पातुं स्पृशति हि मनः किन्नु करवै ॥ १२ ॥
यदि त्वदुक्तं सखि सत्यमेव नायाति नाथस्त्वरितं नु कस्मात् ।
निर्दोषलेपामपि मां यदित्थमुपेक्षते तद्विधिवैपरीत्यम् ॥ १३ ॥
यस्मिन् स्मृतेऽपि चन्दनपङ्को विषमास मारुतो दहनः ।

१. समीक्षन्ती

तदपि न जहाति तं प्रियमतिस्वतन्त्रं मनो हन्त ॥ १४ ॥
अत्रान्तरे च लक्ष्मव्याजात् कुलटाविलोचनाम्बूनि ।
सन्धारयन् कलानिधिरुद्गादनिलो वियोगाग्नेः ॥ १५ ॥
कुलटाकुलकोपारणकटाक्षमोक्षैरिवारुणं चन्द्रम् ।
दृष्ट्वा च हरिविलम्बितमनुतापं साक्रोदीना ॥ १६ ॥

पञ्चमरागेण गीयते ।

हा हा कथं हरिर्मां कृपयिष्यति ।
अधरामृतमपि पाययित्वा जीवयिष्यति ॥ ध्रुवपदम् ।
सङ्गाशयापि साधु न जीवितमिह दूतिका मे वृथा वञ्चनमकृत ।
कं नु व्रजामि शरणं माधवं विना नाथ कृपानिधिरसि दीनायै वदनं दर्शय प्रीतिवृत ॥ १ ॥

परिक्लिष्टामेवं सकृदपि हृदा यत् स्मरति ना-
ऽप्ययोगाग्निज्वालाशबलितमनःस्पर्शमपि तत् ।
न जानाति प्रायस्तदिह सखि साध्वेव समभूत्
सहन्ते न प्राणाः क्षणमपि विलम्बं परममी ॥ १७ ॥
स हि स्त्रीसम्भोगेष्वतुरसमना मन्मथमदो-
ज्झितव्रीडास्ता अप्यतिचतुरमागन्तुमपि न ।
ददत्यन्यत्रेति प्रियतमविलम्बोऽभवदयो
पथि ज्ञातः केनाप्यतिमधुरमूर्तिर्विधिवशात् ॥ १८ ॥
गोपस्त्रीनयनाञ्जनं व्रजवधूनेत्राम्बुजान्तर्गता
तारा तत्कुचचूचुकं मरकताकल्पः कुमारीहृदाम् ॥
गोपीबाहुलतातमालविटपी त्वत्सङ्गमाशाचलद्
वल्लीकल्पतरुः करोतु न चिराद्राधे त्वदिष्टं हरिः ॥ १९ ॥

इति श्रीविठ्ठलेश्वरविरचिते शृङ्गाररसमण्डने चतुर्थ उल्लासः ॥ ४ ॥

---

## पञ्चम उल्लासः ॥

अतीतायामित्थं कथमपि निशायामथ हरिं
दरव्रीडानम्रीभवदतिचलेक्षातिखचिरम् ।
प्रभाते वाक्पेशैरनुनयकृते चातिमधुरं
वदन्तं खिन्नापि प्रणतमपि सासूयमवदत् ॥ १ ॥
यद्रसपूर्णो माधव बहिरन्तश्चापि वर्तसे नूनम् ।
तद्रसविरुद्धवचनं नोचितमृतभाषिणस्ते हि ॥ २ ॥
साधुरसि यस्त्वकीयं गुणमपि रागं तदीयलोचनयोः ।
कृत्वा तन्मालिन्यं स्वयं बिभर्षि व्रजाधीश ॥ ३ ॥
अधरगतं दशनपदं मथयति रसभङ्गनिश्चयं भवति ।
स्थाने स्थानेऽरुणिमानुरागविरलत्वमावदति ॥ ४ ॥
अद्यापि निर्भरध्यानमकटायास्तवान्तरे ।
बहिरप्याविरासीत्तेऽस्याः कुचकुङ्कुमविम्बितम् ॥ ५ ॥
भवान् सा सा भवानासीदिति तस्याः सुरञ्जनम् ।
वसनं वदति श्याम मदपेक्षा तदा कुतः ॥ ६ ॥
यस्तस्यामनुरागः ॥ एव नेत्रारविन्दयोः प्रकटः ।
आसीज्जागरजनितस्तद्गोपनमत्र तेऽशक्यम् ॥ ७ ॥
मन्येऽहं माधव तव लोचनतारान्तरापि सैवास्ते ।
यदिह निमीलयसि मुहुर्गोपयितुं तां मदग्रे ते ॥ ८ ॥
का मम शङ्का वीरस्मररणजयलेखमावहस्युरसि ।
सापि भमदा नूनं लोकातीता ददौ यदिमम् ॥ ९ ॥
तस्या नखाङ्को नैवायं किन्तु त्वद्धृदयान्तरे ।
प्रवेष्टुं रचितं द्वारं तयैवाग्रिमशङ्कया ॥ १० ॥
त्वय्यतिप्रणता सास्ते वीरे यत्कुचकुङ्कुमम् ।
त्वत्पादतलमायातं तदलं गोपनैस्तव ॥ ११ ॥

१ वीक्ष्येति पाठः ।

हृदयानुरूपमेव व्रजेश शीघ्रं विधेहि तामेव ।
अनुसर सरसिजलोचन या कामं तेऽकरोत् पूर्णम् ॥ १२ ॥
अवधीकृता निशा ते स्वागमनेऽद्यापि सा न जातेह ।
अतिसाधुरसि किशोर प्रभात एवागतो यत्त्वम् ॥ १३ ॥
एतादृश्यामपि मयि यदि त्वत्कृतिरीदृशी ।
तदा वदामि किं नाथ किं वा भावि न वेद्मि तत् ॥ १४ ॥
ईषन्मुकुलितनयनं जृम्भन् राधाभयेन रत्यङ्कान् ।
सङ्गोपयन्नुदारः शमयत्वाधिं सरोजाक्ष्याः ॥ १५ ॥
इति श्रीविठ्ठलेश्वरविरचिते शृङ्गाररसमण्डने पञ्चम उल्लासः ॥

## षष्ठ उल्लासः ।

अथ तां विषादमूकां स्मरशरखिन्नां स्वरूपमाचरितम् ।
ध्यायन्ती स्वहृदि हरेः शनैरवोचत् सखी चतुरा ॥ १ ॥
शृणु सखि वचनमिदं मम मा कुरु मानं त्वमुन्मुखे तस्मिन् ।
प्राणप्रियेऽनुरागिणि न ह्युचितं जातु मुग्धाक्षि ॥ २ ॥
मन्दानिले वहति माधव एष राधे
प्राप्तोऽभिसारपदवीं यदि काननेऽस्मिन् ।
लोकत्रये किमपरं सुखमस्ति तत्त्वं
जानास्यहं किमु वदामि तथापि तेऽस्मि ॥ ३ ॥
राधे त्वद्भाग्यमहिमा न वेदविषयोऽप्ययम् ।
यन्माधवस्त्रिलोकस्त्रीमृग्यस्त्वयि रतस्तराम् ॥ ४ ॥
किमिति विषीदसि मुग्धे मधुसूदनमाशु मिल मनस्तापम् ।
मुञ्च विलोचनयुगलं सफलय तद्दर्शनेनाद्य ॥ ५ ॥
कतिधा कथितमिदं ते मा परिहर माधवं जातु ।
सागस्केऽपि प्रणयिनि हृदयस्याद्यत्वयद्धचित्त्वात् ॥ ६ ॥
कुचकुङ्कुमपङ्कं सखि लोचननीरेण सिञ्च मा यदयम् ।

प्रकटोनुराग एव प्रियसमविषयो हि नो दहनः ॥ ७ ॥
हरिरतिकोमलचित्तः सोढुमशक्तस्त्वदीयमानमपि ।
तदिहायास्वतिमधुरं वदतूदारो हरत्वार्तिम् ॥ ८ ॥
अत्रान्तरे प्रणयकोपभरस्मराधि-
निश्वासचञ्चदधरां शिथिलाभिमानाम् ।
राधानुरागभरसार्द्रहृदा स चाडु
सानन्दमिन्दुवदनो निजगाद नाथः ॥ ९ ॥
कल्याणरागेण गीयते ।
सरसिजनयने मानं त्यज ।
मयि न तवोचितमसमशरे परिधावति । ध्रुवपदम् ।
निजाधरसुधया तापं मनसिजरचितं दूरीकुरु ।
निजवाचा सुखं तनु ॥ १ ॥
कुचकुम्भपरीरम्भारम्भसम्भावनैव ते ।
सुखयत्वालि मामेवंभूते किं नु विलम्बसे ॥ १० ॥
लोचनकुवलययुगलं तव नवराकाकलानिधिः किरणैः ।
रञ्जयतु तत्प्रभामतिबिम्बात् साङ्को भवत्वद्य ॥ ११ ॥
रतिपतिमङ्गलकलशे नवपल्लवपाङ्क्तिरुल्लसत्वालि ।
तदुपरि स्थितरसप्रकाशकमधं शशिबिम्बमाविभृहि ॥ १२ ॥
यदि मयि कोपिन्येव प्रणयिन्यसि चारुविविधबन्धांस्त्वम् ।
रदखण्डननखरशरान् घटय मुदाहं त्वदीयोस्मि ॥ १३ ॥
त्वद्भ्रूचापाहितौ नेत्रबाणौ कुसुमधन्वनः ।
अलक्ष्यौ किं नु कुरुषे मुग्धे मयि पुरः सति ॥ १४ ॥
सर्वांशेन सखि त्वं सख्यावयोरस्ति किं न वा ।
परिमाणेन धर्मैश्च तन्निर्धारय तत्त्वतः ॥ १५ ॥
परीरम्भाम्भोभिस्तव वचनमन्त्रैस्त्वदधरा-
मृतेन त्वन्नेत्राम्बुजमिलनतश्चापि सुमुखि ।

शमं प्राप्स्यत्येषः स्मरगरलतापः कथमपि
प्रयोगैर्नान्यैस्तत्त्यज सखि विलम्बं प्रियतमे ॥ १६ ॥
त्वयैवाक्रान्तेऽस्मिन्मम हृदयदेशे न हि परः
समाक्रान्तुं शक्तस्तरुणि परमं दैवमसि यत्।
अतो हित्वा शङ्कां मयि कुरु सरोजाक्षि विपुलं
प्रसादं मौनं च त्यज विमुखतां च व्रज मुदम् ॥ १७ ॥
दूरगगवां हरिः स्वमीत्या नवनीरदार्द्रया वाण्या।
उद्धृतवाह्लादनं कुर्वन् राधाप्रियं तनुतात् ॥ १८ ॥
इति श्रीविट्ठलेश्वरविरचिते शृङ्गाररसमण्डने षष्ठः उल्लासः।

## सप्तम उल्लासः।

इत्थं प्रियामनुनयेन चिरं कथञ्चित्
राधावरे स्मितमुखीं सखि मानयित्वा।
वेशं विधाय च लतागृहपुष्पशय्यां
प्राप्ते त्रपास्मितदृशीमवदत् सखी ताम् ॥ १ ॥
राधे त्वत्सदृशी लोकत्रये का नु नितम्बिनी।
इत्थंभूतो हरिर्यस्यां तदलङ्कारमातनु ॥ २ ॥
इत्युक्त्वा सुमुखीमतिमुदिता पाटीरमृगमदागरुभिः।
कर्पूरागरुसारैरकरोदुद्वर्तनं साऽस्याः ॥ ३ ॥
ततः केवलकाश्मीरपङ्केनोद्वर्तनं सखि।
सर्वाङ्गे सहजामोदमोहने सुदृशोऽकरोत् ॥ ४ ॥
तस्यास्ततः कनकपट्टमयप्रसून-
गुच्छोल्लसत्तनुतरामलपीतदाम्ना।
सानन्दतः कटितटे प्रकटार्धनाभि-
नीवीं बबन्ध वररञ्जनमोहनाम्नी ॥ ५ ॥
माध्यमिकत्वान्मन्ये शून्यालम्बीह मध्यविज्ञानम्।

स्वाधारं कुचकुम्भावनुमापयतः परं सत्त्वम् ॥ ६ ॥
विद्युति नीलो जलदस्तदुपरि तडितः स्थिरा यदि स्युरहो ।
विविधाकल्पयुतायाः कञ्चुक्याः स्यात्तदा साम्यम् ॥ ७ ॥
परिधाप्यासितकञ्चुकमाकल्पांश्चात्र सहचरी चतुरा ।
तस्यै भावि द्विविधं रतमेव वरोरु सूचयति ॥ ८ ॥
सितपीतयूथिकानवमालत्यादि प्रसूननिकरैः सा ।
उद्ग्रथ्य चारुवेणीं मुक्तागुच्छान्परचयत् प्रान्ते ॥ ९ ॥
मृगमदतिलकं विधाय तिर्यङ्मणिजटितामलमुक्तिकायुतं च ।
तदुपरि विदधे ततश्च पुष्पाण्यलकशते विरकान्यकुर्वतास्याः १०॥
भ्रमरचये कमलारुणपरागरेखा यदि भवेत्तस्याम् ।
मकरन्दबिन्दवश्च स्यात् सीमन्ते तदा साम्यम् ॥ ११ ॥
न मुक्ताश्रेणीयं सुरसरिदये किं नु यमुना ।
न केशाः सिन्दूरं नहि सखि सरस्वत्यनुगता ।
तदेवं वेणीति स्मरविरचितं कामितफल-
प्रदानं तीर्थं माधवमुनिवरस्यैव मिलनात् ॥ १२ ॥
कनकमणिजटितविविधाभरणातिमनोज्ञकर्णयोरुपरि ।
अरुणे चकार कुसुमे मनोजबाणाविवाकृष्टौ ॥ १३ ॥
सततं नन्दकुमारस्वरूपचरितामृतश्रुतावनयोः ।
यो निर्भरोनुरागः प्रकटः सोऽयं न पुष्पयुगम् ॥ १४ ॥
मुद्रिकादिविविधाभरणानि प्रेयसीभुजयुगे परिधाप्य ।
अञ्जनं सखि चकार मृगाक्ष्या लोचनाम्बुजयुगे तनुरेखम्॥१५॥
कुवलयबाणावेतौ रतिपतिराज्ञो यदग्रतः कुटिलौ ।
विधिना रचितौ तत्सखि विद्धौ न बहिः समायातः ॥ १६ ॥
दलिताञ्जननीलः श्रीकृष्णः परमे तदीयदृशोः ।
विषय इति ज्ञापयति प्रियसखि परितोञ्जनं तस्याः ॥ १७ ॥
आधिक्यान्नयनारविन्दगरसो मा यात्विति प्रेयसी

यत्नेनाञ्जनसेतुमत्र विदधे सम्प्रत्यणूद्भिद्भूः ॥
एतेनैव सरित्सहस्रमखिलास्वाशास्वयेऽचालयत्
तद्युक्तं कुटिलस्य हि मियसखि स्वाभाविकोयं गुणः ॥ १८॥
अञ्जनरञ्जितनयनं खञ्जनमेनं जयत्ययं यदिदम् ।
स्थिरमपि सदा हरेर्हृदि तरलतरत्वं विभर्त्येव ॥ १९ ॥
राधाकृपया यद्यपि वर्णयितुं शक्तिरस्ति मे तदपि ।
नो वर्णयामि सङ्गमकथाविलम्बोऽप्यसह्यो यत् ॥ २० ॥
अशेषभूषणं तस्या विधाय सुमनस्स्रजम् ।
कण्ठे चकार पाटीरकुङ्कुमादिविचित्रिताम् ॥ २१ ॥
तन्वङ्गमुत्तरीयं सा परिधाप्य सुरञ्जनम् ।
ददौ कर्पूरकस्तूरीयुतं ताम्बूलमुत्तमम् ॥ २२ ॥
ततश्चादर्शान्तः प्रतिफलितमेषा निरुपमं
स्वरूपं दृष्ट्वातिप्रमुदितमना व्रीडितदृशा ।
कपोले किञ्चित्स्वाश्चलमनुचकारातिरुचिरे
स्मितस्मेरां काचित् सहचरि तदा तां समवदत् ॥ २३ ॥
मालवगौडीरागाभ्यां गीयते ।
राधिके सरसिजनयने, अनुसर मधुमथनम् । ध्रुवपदम् ।
सुमुखि तवानुनये कृतबहुतरयत्नं ।
सम्प्रति कुञ्जगतं व्रजरत्नम् ॥ १ ॥
घननिभहरिमिलने सफलय निजरूपं ।
सुन्दरि राधे विद्युल्लतासरूपम् ॥ २ ॥
त्वदनुगुणो मन्दोयं प्रेरयति प्रेष्ठसङ्गमे पवनः ।
शिक्षयति चातिमन्दं चरणन्यासं घने तमसि ॥ २४ ॥
अयमभिसारयोग्यः समय इति ज्ञापनाय पिकदूतः ।
त्वामाह्वयति कलं सखि कुहूकुहूरित्युदारतरम् ॥ २५ ॥
युवजनहृदयविदारणकुसुमेषु विमुक्तकुवलयेपूणाम् ।

सन्ततिरलौकिकानां तम इत्यभिधीयते सुमुखि ॥ २६ ॥
चन्द्राभिसारिकाशावनितानेत्रार्थमञ्जनं राज्या ।
यद्रचितं वृन्दावनपात्रे स्थूले सदुल्लसति ॥ २७ ॥
ज्ञातं निखिलसखीभिस्तवाङ्गमेतन्मनोजसमराय ।
वद्युक्तमित्यलज्जं तदभिसराराातिसरसहृदा ॥ २८ ॥
नूपुररशनानिःस्वनडिण्डिममुपयाहि माधवं राधे ।
ईषत्कुञ्चित्कुटिलाञ्चलेन नयनेषुणा जय तम् ॥ २९ ॥
कुञ्चिताधरमुदञ्चितदृष्टि स्वां भ्रपाथंनतसस्मितदृष्टिम् ।
कामभावचपकः सखि चुम्बत्वच्युतः सचिबुकग्रहमुच्चैः ॥३०॥
इति श्रीविठ्ठलेश्वरविरचिते शृङ्गाररसमण्डने सप्तम उल्लासः ।

---

## अष्टमः उल्लासः ।

काञ्चनकाञ्चीदामश्रवणाभरणांशुदीप्तकुञ्जस्य ।
द्वारे दृष्ट्वा नाथं सव्रीडां तां सखी प्राह ॥ १ ॥
प्रविश राधिके माधवान्तिकं मदनभूपते राजमन्दिरे ।
विलस राजिते विश्वगुल्लसत्कुसुमपल्लवैः कोकिलस्वने ॥ २ ॥
मन्थरविपुलतडिन्निभघनजघने विविधकुसुमचयरचिते ।
शयने विलस चिरं सुचितरे नितम्बन्युदारतरे ॥ ३ ॥
पिककलकूजितमुखरे सुखय हरिं सात्विकमलानिभनेत्रम् ।
विकसितसरसिजनयने प्रकटय गूढं रसं राधे ॥ ४ ॥
चिरचिन्तनसम्प्राप्तत्वदैक्ये को नु सम्भ्रमः ।
इन्दीवराक्षि कन्दर्पसुन्दरे नन्दनन्दने ॥ ५ ॥
प्रकटस्त्वद्भावोयं रसशतवलितः सरोजमुग्धाक्षि ।
श्रीकृष्णाख्यस्तमिह स्वस्थानगतं कुरुष्वाय ॥ ६ ॥
ततः साकूतार्धप्रणतविपुलानन्दसहज-

---

१. पांयस्थले न सदुल्लसतीति पाठः । २. हरिमाशि इति पाठः ।

स्मितस्मेरापाङ्गेक्षणमुदितमञ्जीरनिनदम् ।
विवेशानन्दार्द्रोत्पुलकितशरीरस्य सदनं
हरेर्विश्वङ्मोदप्रसरमुदितालिङ्गनियुतम् ॥ ७ ॥
उद्वेलानन्दजलधितरङ्गपुलकोन्नतम् ।
राधैकतानहृदयं सा ददर्शालि माधवम् ॥ ८ ॥
अहमहमिकया राधासमागमेऽभ्युत्थितैरिवाङ्गरुहैः ।
भीत्या प्रथमागमने परिरब्धुमिवोत्सुकैः रुचिरम् ॥ ९ ॥
राधेक्षणसुधावर्षाम्भोधजावाङ्कुरैरिव ।
रोमभी रसधाराभिरिव राधान्तरोन्मुखैः ॥ १० ॥
भत्यन्तान्तःस्थितप्रेम्णा बहिरागमने सखि ।
कर्मसन्दर्शनायाङ्कुरैरप्रेसरैरिव ॥ ११ ॥
सकुसुमकेशं राधा मञ्जीरनिनादसिद्धकल्पमन्त्रैः ।
अन्तर्गर्भितकुसुमस्तबकमिव स्मरतरुं सत्त्रः ॥ १२ ॥
राधाननराकेशमद्वद्रूपमाम्बुराशिमध्यस्थम् ।
मन्ये ते हक्षीनावुच्चालयतो यदम्बुधग्रात् ॥ १३ ॥
राधागुणामृतसरोवरकर्णयुग्मात्
तद्दृष्टिदृष्टिभरतो बहिरागतौ तत् ।
त्यक्तुं च कुण्डलक्षपावसमर्थचिन्ता-
वालम्ब्य सुन्दरि सदयपि विप्लुतस्ते ॥ १४ ॥
वद्दिदृक्षा रूपामृतरससरस्तद्गुणसरो
हृदि स्मृत्वा चात्रागमनविषये संशयवशात् ।
चलाचल्याधिक्यं श्रवणसरसि स्नेहशफरा-
श्रयौ मन्वानौ तौ शशिमुखि न तज्जातु जहतः ॥ १५ ॥
राधागुणैः सहाविष्टे माधवान्तर्हृदि स्मरे ।
तत्र गन्तुमशक्तोऽयं केतुः कर्णावलम्बितः ॥ १६ ॥

---

१ सम्भाव इति पाठ ।

मानद मण्डनमखिलं रचय कचेषु प्रभिन्नकुसुमेषु ।
रतिगलितेषु मनोहरमलयजकस्तूरिकारेखाः ॥ २० ॥
मृगमदतिलकं ललितं विधाय मुक्ताफलमयं बिन्दुम् ।
कुरु सतडिद्घन इव नवसुधानिधानं सरोजाक्षि ॥ २१ ॥
स्वत्परिरम्भरसामृतभरितं कुचकलशमलसद्युचिरम् ।
मृगमदपत्रविचित्रं कुरु निजकरपद्मविश्रामम् ॥ २२ ॥
विविधाभरणमनोज्ञश्रवणयुगे चारुकुण्डले कृत्वा ।
ततुतरविकचेन्दीवरकुसुमे कुरु तत्र मुग्धाक्ष ॥ २३ ॥

स्वच्चुम्बनारुणकपोलतले मदीये
कन्दर्पगर्वहर तत्प्रतिबिम्बितेन ।
वक्त्रेन्दुरङ्कुसुपमामयमावहस्व-
व्यत्यन्तनिर्मलतनुर्विकचाम्बुजाक्ष ॥ २४ ॥
स्वच्चुम्बनामृतसरोवरमज्जनेन
क्लिष्टाङ्गरागमिव लोचनभृङ्गयुग्मम् ।
आघूर्णमुज्ज्वलय साञ्जनरेखमात्म-
रूपामृताप्लुतमिवाङ्ग कुरुष्व नाथ ॥ २५ ॥

स्वपीतवसनेनाङ्ग नीवीं रचय सुन्दरे ।
नितम्बे शम्बरारातिविजयनिस्वनमेखलाम् ॥ २६ ॥
कलसिञ्जितजितरतिपतिमञ्जीरयुगं च चरणयोः कृत्वा ।
रचयानल्पाकल्पाङ्गुलीष्वलक्तेन चित्राणि ॥ २७ ॥

प्राणप्रियानिगदितः सुमुखीत्यमङ्ग-
स्तन्मण्डनं व्यरचयन्मनसोऽप्यगम्यम् ।
मन्येऽहमालि विविधं निजभावपूर्ण
राधावशः स कृतवानिह तत्र तत्र ॥ २८ ॥

इति श्रीविट्ठलेश्वरविरचिते शृङ्गाररसमण्डने नवम उल्लासः ॥

१. कुसुमानीति पाठ ।

